महादेवशास्त्रिग्रन्थमाला - ३१

# व्याकरणप्रश्नार्णवः

शिवराम रामकृष्ण भट्टः



संस्कृतभारती
नवदेहली

2.4

महादेवशास्त्रिग्रन्थमाला - ३१

# व्याकरणप्रश्नकोषः

लेखकः

शिवराम रामकृष्ण भट्टः

प्रकाशनम्

संस्कृतभारती

नवदेहली

प्रकाशनम्
**संस्कृतभारती**
25, दीनदयाल उपाध्याय मार्ग,
नई दिल्ली - 110002
दूरभाषा- 011-23236711



प्रथममुद्रणम् - २०१२ २००० प्रतिकृतयः
द्वितीयमुद्रणम् - २०१६ २००० प्रतिकृतयः

मूल्यम् - रू. ८०/-

मुद्रणम् - ग्राफिंक् वर्ल्ड
दरिया गंज, नई दिल्ली-२

**ISBN - 978-93-81160-52-7**

**VYAKARAN-PRASHNAKOSHAH**

A reference book of Samskrit grammer by Shivram Bhatta.

**Publishers -** SAMKSRITA BHARTI, 25, Deendayal Upadhyaya Marg, New Delhi - 110002
Tel. - 11-23236711/22
Email:*samskritamdelhi@gmail.com*

Pages - VI + 130

Price - 80/-

Second Edition : *2016*

Printed by : Graphic World, Darya Ganj, New Delhi-2



**वेदमूर्तिः पं॰ महादेवशास्त्री**

वाजसनेयसंहितां शतपथब्राह्मणं च साङ्गं सभाष्यम् अधीत्य कण्ठस्थीकृत्य च अद्वैतवेदान्तस्य धर्मशास्त्रस्य कात्यायनश्रौत-सूत्राणां पारस्करगृह्यसूत्राणां च सभाष्यम् अध्ययनं विधाय देवयाज्ञिकपद्धत्या अग्निहोत्र-दर्शपूर्णमास-चातुर्मास्यादीन् स्वयं अनुतिष्ठन् शिष्यान् अध्यापयति स्म ।

राष्ट्रपतिपुरस्कारेण उत्तरप्रदेशदेहल्यादि-सर्वकारैः च सम्मानितः वेदनिधिः पं॰ महादेवशास्त्रिमहोदयः संस्कृते आधुनिकं रुचिरं साहित्यं भवेदिति काङ्क्षति स्म ।

अतः तस्मै तपोधनाय समर्प्यते एषा ग्रन्थमाला।

## अवधेयाः अंशाः

१. अस्मिन् ग्रन्थे व्याकरणशास्त्रानुसारं विषयानुगुणञ्च सान्दर्भिकप्रश्नाः उल्लिखिताः सन्ति।

२. व्याकरणशास्त्रसम्बद्धाः केचन पारिभाषिकशब्दाः वर्तन्ते। शास्त्रान्तरे तेषाम् अर्थः अन्यथा अपि स्यात्।

३. बहवः प्रश्नाः पूर्वप्रश्नमनुसरन्तः पृष्टाः वर्तन्ते।

४. प्राधान्येन प्रसिद्धव्याकरणग्रन्थान् आधृत्यैव प्रश्नाः निर्मिताः सन्ति।

५. सामान्यतया सर्वविषयस्पर्शनप्रयासः कृतः वर्तते।

६. प्रश्नरचनासन्दर्भे गभीरतया विषयस्पर्शः न कृतः अपि तु उपर्युपरिष्टात्।

७. प्रश्नमाध्यमेन व्याकरणग्रन्थपरिचयः सिद्धान्तानां प्रकटीकरणमवगमनञ्च अस्य ग्रन्थस्योद्देश्यम्।

८. अत्र व्याकरणमधिजिगांसमानानां ज्ञानपिपासूनां कृते एव प्रश्नाः रचिताः।

९. छात्राणां व्याकरणशास्त्रे मङ्क्षु प्रवेशार्थम् एकाङ्क्षा इव लघुप्रश्नाः एव ग्रथिताः न तु व्याख्यानात्मकाः।

१०. क्वचित् दीर्घसूत्रवार्तिकपरिभाषाप्रसिद्धवाक्यादीनि असम्पूर्णानि उक्तानि।

११. व्याकरणशास्त्रे प्रतिपादकाः विषयाः एव प्रश्नरूपेण कथिताः न तु नवीनाः।

१२. इतोऽपि जिज्ञासुभिः तत्तद्ग्रन्थाः अवलोकनीयाः।

१३. केचन प्रश्नाः भिन्नभिन्नसिद्धान्तानुसारं पुनरावृत्ताः वर्तन्ते।

## विषयानुसूची

# वैयाकरणसिद्धान्तकौमुदी

## प्रथमभागः

### संज्ञादिप्रकरणम्

१. वैयाकरणसिद्धान्तकौमुद्याः रचयिता कः? - भट्टोजिदीक्षितः।

२. बालमनोरमाटीकायाः कर्ता कः ? - वासुदेवदीक्षितः।

३. तत्त्वबोधिनीव्याख्यायाः कर्ता कः ? - श्रीज्ञानेन्द्रसरस्वती।

४. माहेश्वरसूत्राणि कति ? - चतुर्दश।

५. माहेश्वरसूत्रेषु कोऽयं वर्णः द्विरनुबध्यते ? - णकारः।

६. माहेश्वरसूत्रेषु कोऽयं वर्णः द्विरुपदिष्टः ? - हकारः।

७. किमर्थमुपदिष्टानि माहेश्वरसूत्राणि ? - अणादिप्रत्याहारसंज्ञार्थानि।

८. हकारादिषु अकारः किमर्थः ? - उच्चारणार्थः।

९. सूत्राणि कति ? कानि तानि? -षट्। संज्ञा, परिभाषा, विधिः, नियमः, अतिदेशः, अधिकारः।

१०. किं नाम संज्ञासूत्रम् ? - संज्ञासंज्ञिसम्बन्धबोधकं सूत्रम्।

११. किं नाम परिभाषात्वम् ? - अनियमे नियमकारिणीत्वम्।

१२. किं नाम विधिसूत्रम् ? - आगमादेशादिविधायकं सूत्रम्।

१३. को नाम नियमः ? - सिद्धे सति आरभ्यमाणः विधिः नियमः।

१४. को नाम अतिदेशः ? - अविद्यमानस्य धर्मस्य विद्यमानत्वकल्पनम्।

१५. किं नाम अधिकारत्वम् ? - स्वदेशे फलशून्यत्वे सति उत्तरत्र फलजनकत्वम्।

१६. अन्त्यहलाम् इत्संज्ञाविधायकं सूत्रं किम् ? - हलन्त्यम् (१-३-३)

१७. अनुनासिकाचाम् इत्संज्ञाविधायकं सूत्रं किम् ? - उपदेशेऽजनुनासिक इत् (१-३-२)

१८. आदिरन्त्येन सहेता (१-१-७१) इति सूत्रेण किं विधीयते ? - प्रत्याहारसंज्ञा।

१९. प्रत्याहारेषु इतामग्रहणे किं प्रमानम् ? - अनुनासिक इत्यादिनिर्देशः।

२०. कस्य ह्रस्वः, दीर्घः, प्लुतः इति संज्ञा ? - एकमात्राकालिकस्य अचः ह्रस्वः इति, द्विमात्राकालिकस्याचः दीर्घः इति, त्रिमात्राकालिकस्य अचः प्लुतः इति संज्ञा।

२१. अनुनासिकसंज्ञासूत्रं किम् ? - मुखनासिकावचनोऽनुनासिकः (१-१-८)

२२. अकारस्य कति भेदाः ? - अष्टादश।
२३. लृवर्णस्य कः भेदः नास्ति ? - दीर्घः।
२४. एचां कः भेदः नास्ति ? - ह्रस्वः।
२५. सवर्णसंज्ञासूत्रं किम् ? - तुल्यास्यप्रयत्नं सवर्णम् (१-१-९)
२६. कण्ठस्थानं केषां वर्णानाम् ? - अकुहविसर्जनीयानाम्।
२७. तालुस्थाने के के वर्णाः निष्पद्यन्ते ? - इचुयशाः।
२८. केषां वर्णानाम् उत्पत्तिस्थानं मूर्धा ? - ऋटुरषाणाम्।
२९. लृतुलसाः कुत्र निष्पद्यन्ते ? - दन्तेषु।
३०. उपूपध्मानीयानाम् उत्पत्तिस्थानं किम् ? - ओष्ठौ।
३१. ञमङणनानां कः अधिकः गुणः ? - नासिका।
३२. वकारस्य निष्पत्तिस्थानं किम् ? - दन्तोष्ठम्।
३३. अनुस्वारः क्व निष्पद्यते ? - नासिकायाम्।
३४. प्रयत्नः कतिविधः ? - द्विविधः।
३५. तौ प्रयत्नौ कौ ? - आभ्यन्तरः, बाह्यः।
३६. आभ्यन्तरः कतिविधः ? - चतुर्विधः।
३७. ते आभ्यन्तराः के ? - स्पृष्टम्, ईषत्स्पृष्टम्, विवृतम्, संवृतम्।
३८. स्पृष्टप्रयत्नः केषां वर्णानाम् ? - स्पर्शानाम्।
३९. ईषत्स्पृष्टं केषां वर्णानाम् ? - अन्तःस्थानाम्।
४०. केषां वर्णानां विवृतप्रयत्नः ? - ऊष्मणां स्वराणाञ्च।
४१. कस्य संवृतम् ? - ह्रस्वस्य अकारस्य प्रयोगे संवृतम्।
४२. विवृतस्य अकारस्य संवृतत्वं केन सूत्रेण विधीयते ? - अ अ (८-४-६८)
४३. पूर्वत्रासिद्धं (८-२-१) कीदृशं सूत्रम् ? - अधिकारसूत्रम्।
४४. यमो नाम कः ? - वर्गेषु आद्यानां चतुर्णां पञ्चमे वर्णे परे पूर्वसदृशः कश्चिद् वर्णः 'यमः' भवति।
४५. स्पर्शवर्णाः के ? - ककारादारभ्य मकारपर्यन्तम्।
४६. अन्तःस्थाः के ? - यरलवाः।
४७. ऊष्माणः के ? - शषसहाः।
४८. स्वराः के ? - अचः।
४९. को नाम जिह्वामूलीयः ? - ≍क, ≍ख इति कखाभ्यां प्राग् अर्धविसर्गसदृशः।
५०. उपध्मानीयो नाम कः ? - ≍प, ≍फ इति पफाभ्यां प्राग् अर्धविसर्गसदृशः।

५१. सवर्णग्राहकं सूत्रं किम् ? - अणुदित्सवर्णस्य चाप्रत्ययः (१-१-६९)
५२. बाह्यप्रयत्नाः कति ? - एकादश।
५३. ते च के ? - विवारः, संवारः, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितः।
५४. तपरः इत्यत्र कथं विग्रहः ? कः समासः ? - तः परः यस्मात् सः तपर इति बहुव्रीहिः, तात् परः तपरः इति तत्पुरुषो वा।
५५. वृद्धिरादैच् इति कीदृशं सूत्रम् ? - संज्ञासूत्रम्।
५६. गुणसंज्ञासूत्रं किम् ? - अदेङ् गुणः (१-१-२)
५७. धातुसंज्ञासूत्रं किम् ? - भूवादयो धातवः (१-३-१)
५८. प्रादयः कति ? - द्वाविंशतिः (२२)
५९. के च ते ? - प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ् नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप।
६०. उपसर्गसंज्ञासूत्रं किम् ? - उपसर्गाः क्रियायोगे (१-४-५९)
६१. गतिश्च (१-४-६०) इत्यनेन किं विधीयते ? - गतिसंज्ञा।
६२. अवसानसंज्ञासूत्रं किम् ? - विरामोऽवसानम् (१-४-११०)
६३. संहितासंज्ञासूत्रं किम् ? - परः संनिकर्षः संहिता (१-४-१०९)
६४. पदसंज्ञासूत्रं किम् ? - सुप्तिङन्तं पदम् (१-४-१४)
६५. संयोगसंज्ञासूत्रं किम् ? - हलोऽनन्तराः संयोगः (१-१-७)
६६. लघुसंज्ञासूत्रं किम् ? - ह्रस्वं लघु (१-४-१०)
६७. गुरुसंज्ञासूत्राणि कति सन्ति ? - द्वे।
६८. ते च के ? - संयोगे गुरु (१-४-११) दीर्घञ्च (१-४-१२)
६९. इकः इति षष्ठ्यन्तं पदं कया परिभाषया उपतिष्ठते ?
- इको गुणवृद्धी (१-१-३)
७०. टित्कितौ आगमौ कया परिभाषया आद्यन्तावयवौ भवतः ?
- आद्यन्तौ टकितौ। (१-१-४६)
७१. एकस्य स्थाने अनेकादेशप्रसङ्गे किं सूत्रं नियमयति ?
- स्थानेन्तरतमः (१-१-५०)
७२. अनेकाल्शित्सर्वस्य (१-१-४४) इति कीदृशं सूत्रम् ? - परिभाषासूत्रम्।
७३. सूत्रस्थपदानामुत्तरत्र अनुवृत्तौ किं सूत्रं प्रमाणम् ?
- स्वरितेनाधिकारः। (१-३-११)

७४. यण्सन्धिसूत्रं किम् ? - इको यणचि। (६-१-७७)

७५. सुध्युपास्यः इत्यत्र कः सन्धिः ? - यण्।

७६. आदेशस्य स्थानिवत्त्वे किं सूत्रं प्रमाणम् ?

- स्थानिवदादेशोऽनल्विधौ (१-१-५६)

७७. अदर्शनं लोपः (१-१-६०) इत्यनेन किं विधीयते ? - लोपसंज्ञा।

७८. यान्तवान्तादेशसन्धिसूत्रं किम् ? - एचोऽयवायावः। (६-१-७८)

७९. क्रय्यो नाम कः ? - क्रेतारः क्रीणीयुः इति बुध्या आपणे प्रसारितं वस्तु।

८०. गुणसन्धिसूत्रं किम् ? - आद्गुणः। (६-१-८७)

८१. वृद्धिसन्धिसूत्रं किम् ? - वृद्धिरेचि। (६-१-८८)

८२. पररूपसन्धिसूत्रं किम् ? - एङि पररूपम्। (६-१-९४)

८३. टिसंज्ञासूत्रं किम् ? - अचोऽन्त्यादि टि। (१-१-६४)

८४. जश्त्वसन्धिसूत्रं किम् ? - झलां जशोऽन्ते। (८-३-३९)

८५. सवर्णदीर्घसन्धिसूत्रं किम् ? - अकः सवर्णे दीर्घः। (६-१-१०१)

८६. पूर्वरूपसन्धिसूत्रं किम् ? - एङः पदान्तादति। (६-१-१०९)

८७. प्रकृतिभावसन्धिसूत्रं किम् ? - प्लुतप्रगृह्या अचि नित्यम् (६-१-१२५)

८८. प्रत्यभिवादो नाम कः ? - विधिवद् अभिवादयमानं प्रति विधिवदाशीर्वचनम्।

८९. हूतं नाम किम् ? - आह्वानं सम्बोधनं वा।

९०. हरी एतौ इत्यत्र केन प्रगृह्यसंज्ञा?

- ईदूदेद्द्विचनं प्रगृह्यम् (१-१-११)

९१. इ इन्द्रः इत्यत्र केन प्रगृह्यसंज्ञा ? - निपात एकाजनाङ् (१-१-१४)

९२. स्वरसन्धयः कति ? - अष्टौ।

९३. ते च के ? - यण्, यान्तवान्तादेशः, गुणः, वृद्धिः, दीर्घः, पररूपम्, पूर्वरूपम्, प्रकृतिभावः।

९४. स्वरसन्धिर्नाम कः ? - स्वरे परे स्वरस्य स्थाने जायमानो विकारः।

९५. सन्धिर्नाम कः ? - वर्णविकारः वर्णानामत्यन्तं सामीप्यं वा।

९६. श्चुत्वसन्धिसूत्रं किम् ? - स्तोः श्चुना श्चुः (८-४-४०)

९७. सच्चित् इत्यत्र कः सन्धिः ? - श्चुत्वम्।

९८. ष्टुत्वसन्धिसूत्रं किम् ? - ष्टुना ष्टुः (८-४-४१)

९९. वागीशः इत्यत्र कः सन्धिः ? - जश्त्वसन्धिः।

१००. अनुनासिकसन्धिसूत्रं किम् ? - यरोऽनुनासिकेऽनुनासिको वा। (८-४-४५)

१०१. एतन्मुरारिः इत्यत्र कः सन्धिः ? - अनुनासिकः।
१०२. तल्लयः इत्यत्र कः सन्धिः ? - परसवर्णः।
१०३. उत्थानम् इत्यत्र कः सन्धिः ? - पूर्वसवर्णः।
१०४. वाग्घरिः इत्यत्र कथं सन्धिच्छेदः ? - वाग् +हरिः।
१०५. अनुस्वारसन्धिसूत्रं किम् ? - मोऽनुस्वारः (८-३-२३)
१०६. हरिं वन्दे इति कः सन्धिः ? - अनुस्वारः।
१०७. शान्तः इत्यत्र कः सन्धिः ? - परसवर्णः।
१०८. यथासंख्यमनुदेशः समानाम् (१-३-१०) कीदृशं सूत्रम् ? - परिभाषासूत्रम्।
१०९. प्राङ्क् षष्ठः अत्र कः आगमः ? - कुक्।
११०. सुगण्ट् षष्ठः अत्र कः आगमः ? - टुक्।
१११. प्रत्यङ्ङात्मा इत्यत्र कः सन्धिः ? - ङमुडागमसन्धिः।
११२. संस्स्कर्ता इत्यस्य कति रूपाणि भवन्ति ? - अष्टोत्तरं शतम्।
११३. कौतस्कुतः इत्यस्य कोऽर्थः ? - कुतः कुतः आगतः।
११४. स्वच्छया इत्यत्र कः आगमः ? - तुक्।
११५. प्रथमयोः पूर्वसवर्णः (६-१-१०२) इत्यनेन किं विधीयते ?
- पूर्वसवर्णदीर्घः।
११६. भ्रातर्गच्छ इत्यादौ हशि च (६-१-११४) इति उत्वं कुतो न ?
- रुसम्बन्धिरेफस्य विधानात्।
११७. को नाम लघूच्चारणः ? - यस्य उच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते सः।
११८. विप्रतिषेधे परं कार्यम् (१-४-२) कीदृशं सूत्रम् ? - परिभाषा।
११९. सैष दाशरथी रामः इत्यत्र कस्य लोपः ? - सु इत्यस्य।

## षड्लिङ्गप्रकरणम्

१२०. प्रातिपदिकसंज्ञासूत्रं किम् ?
- अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१-२-४५)
१२१. कृत्तद्धितसूत्रे समासग्रहणं किमर्थम् ? - नियमार्थम्।
१२२. कः नियमः ? - यत्र संघाते पूर्वो भागः पदं तस्य चेद् भवति तर्हि समासस्यैव।
१२३. नियमस्य किं फलम् ? - नियमेन वाक्यस्य प्रातिपदिकसंज्ञा न भवति।

१२४. ङ्याप्प्रातिपदिकात् इत्यत्र ङ्याब्ग्रहणं किमर्थम् ?
- ङ्याबन्तात् तद्धितोत्पत्तिः यथा स्यात् ङ्याब्भ्यां प्राग् मा भूत् इत्येवमर्थम्।

१२५. कति विभक्तयः ? - सप्त।

१२६. विभक्तिप्रत्ययाः कति ? - एकविंशतिः।

१२७. कः प्रत्ययः त्रिवारं श्रूयते ? - भ्याम्।

१२८. कः प्रत्ययः द्विवारं श्रूयते ? - भ्यस्, ओस्।

१२९. विभक्तिसंज्ञासूत्रं किम् ? - विभक्तिश्च (१-४-१०४)

१३०. बहुत्वविवक्षायां किं भवति ? - बहुवचनम्।

१३१. प्रातिपदिकस्य द्वित्रादिप्रयोगप्राप्तौ किं नियमयति ?
- सरूपाणामेकशेष एकविभक्तौ (१-२-६४)

१३२. कानि सरूपाणि ? - समानं रूपं येषां तानि।

१३३. सम्बुद्धिसंज्ञासूत्रं किम् ? - एकवचनं सम्बुद्धिः (२-३-४९)

१३४. अङ्गसंज्ञासूत्रं किम् ?
- यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् (१-४-१३)

१३५. किं नाम तदादि ? - तत् (प्रकृतिरूपम्) आदिः यस्य तत्।

१३६. सर्वनामसंज्ञासूत्रं किम् ? - सर्वादीनि सर्वनामानि (१-१-२७)

१३७. सर्वादीनि इत्यत्र कथं विग्रहः ? - सर्वः आदिः येषां तानि।

१३८. सर्वादयः कति ? - पञ्चत्रिंशत्।

१३९. सर्वादिगणे उभशब्दस्य पाठः किमर्थः ? - अकजर्थः।

१४०. उभयशब्दस्य द्विवचनं नास्तीति कः ? - कैयटः।

१४१. उभयशब्दस्य द्विवचनम् अस्तीति कः वदति?- हरदत्तः।

१४२. का नाम व्यवस्था ? - स्वाभिधेयापेक्षावधिनियमो व्यवस्था।

१४३. सुडनपुंसकस्य (१-१-४३) इत्यनेन किं विधीयते ? - सर्वनामस्थानसंज्ञा

१४४. भसंज्ञासूत्रं किम् ? - यचि भम् (१-४-१८)

१४५. विश्वपाशब्दः द्वितीयाबहुवचने किं भवति ? - विश्वपः।

१४६. घिसंज्ञासूत्रं किम् ? - शेषो घ्यसखि (१-४-७)

१४७. आङो नाऽस्त्रियाम् (७-३-१२०) इत्यत्र आङ् नाम किम् ?
- टाप्रत्ययस्य संज्ञा।

१४८. उपधासंज्ञासूत्रं किम् ? - अलोऽन्त्यात्पूर्व उपधा (१-१-६५)

१४९. अपृक्तसंज्ञासूत्रं किम् ? - अपृक्त एकाल्प्रत्ययः (१-२-४१)

१५०. पतिः समास एव (१-४-८) कीदृशं सूत्रम् ? - नियमसूत्रम्।
१५१. संख्यासंज्ञासूत्रं किम् ? - बहुगणवतुडति संख्या (१-१-२३)
१५२. नदीसंज्ञासूत्रं किम् ? - यू स्त्र्याख्यौ नदी (१-४-३)
१५३. तृज्वत्क्रोष्टुः (७-१-९५) कीदृशं सूत्रम् ? - अतिदेशसूत्रम्।
१५४. औङ आपः (७-१-१८) इत्यत्र औङ् नाम किम् ?
- औकारविभक्तेः संज्ञा।
१५५. सर्वनामस्थानसंज्ञासूत्रं किम् ? - शि सर्वनामस्थानम् (१-१-४२)
१५६. सम्प्रसारणसंज्ञासूत्रं किम् ? - इग्यणः सम्प्रसारणम् (१-१-४५)
१५७. अन्वादेशो नाम कः ?
-किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानम्।
१५८. चर्मतिलः नाम कः ? - चर्मणि तिला अस्य।
१५९. ब्रम्हनिष्ठः नाम कः ? - ब्रम्हणि निष्ठा यस्य सः।
१६०. अष्टनः आत्वस्य वैकल्पिकत्वे किं प्रमाणम् ?
- अष्टनो दीर्घात् (६-१-१७२) इति सूत्रे दीर्घग्रहणम्।
१६१. प्रियाष्ट्नः इत्यत्र कुतः ष्टुत्वं न ? - अल्लोपस्य स्थानिवद्भावात्।
१६२. कृत्संज्ञासूत्रं किम् ? - कृदतिङ् (३-१-९३)
१६३. किं नाम वाक्यम् ? - एकतिङ्विशेष्यकम्।
१६४. पश्यार्थो नाम कः ? - पश्यः (दर्शनम्) अर्थः यस्य सः।
१६५. किं नाम अनालोचनम् ? - अचाक्षुषज्ञानम्।
१६६. आमन्त्रितसंज्ञासूत्रं किम् ? - सामन्त्रितम् (२-३-४८)
१६७. अभ्यस्तसंज्ञासूत्रं किम् ? - उभे अभ्यस्तम् (६-१-५)
१६८. अव्ययसंज्ञासूत्रं किम् ? - स्वरादिनिपातमव्ययम् (१-१-३७)

## स्त्रीप्रत्ययादिप्रकरणम्

१६९. स्त्रीप्रत्ययाः कति सन्ति ? - अष्टौ।
१७०. ते च के ? - टाप्, डाप्, चाप्, ङीप्, ङीष्, ङीन्, ऊङ्, ति।
१७१. अनुपसर्जनात् (४-१-१४) कीदृशं सूत्रम् ? - अधिकारसूत्रम्।
१७२. नदी इत्यत्र कः स्त्रीप्रत्ययः ? - ङीप्।
१७३. गार्ग्यायणी इत्यत्र अवान्तरस्त्रीप्रत्ययः कः ? - ष्फ।

१७४. कुमारी इत्यत्र ङीप् केन सूत्रेण ? - वयसि प्रथमे (४-१-२०)

१७५. द्विगोः (४-१-२१) सूत्रस्य किमुदाहरणम् ? - त्रिलोकी।

१७६. कुण्डोध्नी अत्र कः प्रत्ययः ? - ङीष्।

१७७. कुण्डोध्नी इत्यत्र कथं विग्रहः ? - कुण्डमिव ऊधः यस्याः सा।

१७८. अन्तर्वत्नी का ? - गर्भिणी।

१७९. पत्नी इत्यत्र नकारादेशः केन सूत्रेण ? - पत्युर्नो यज्ञसंयोगे (४-१-३३)

१८०. सपत्नी का ? - समानः (एकः) पतिः यस्याः सा।

१८१. गौरी अत्र केन सूत्रेण कः प्रत्ययः? - षिद्गौरादिभ्यश्च (४-१-४१) ङीष्।

१८२. गोपी इत्यत्र केन सूत्रेण ङीष् ? - पुंयोगादाख्यायाम् (४-१-४८)

१८३. सूर्यस्य स्त्री देवता का ? - सूर्या।

१८४. महद्धिमम् इत्यर्थे स्त्रियां किं रूपम् ? - हिमानी।

१८५. का नाम यवनानी ? - यवनानां लिपिः।

१८६. आचार्यानी का ? - आचार्यस्य स्त्री।

१८७. आचार्या का ? - स्वयं व्याख्यात्री।

१८८. ब्रह्माणी इति कथम् ? - या ब्रह्माणम् आनयति (जीवयति) सा।

१८९. पाणिगृहीती का ? - भार्या।

१९०. स्वाङ्गं कतिधा ? - त्रिधा।

१९१. किं च तत् स्वाङ्गम् ? - अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथायुतम्।।

१९२. शूर्पणखा का ? - राक्षसीविशेषस्य नाम (रावणस्य अनुजा)

१९३. अशिश्वी का ? - न विद्यते शिशुः यस्याः सा।

१९४. तटी इत्यत्र केन सूत्रेण ङीष् ? - जातेरस्त्रीविषयादयोपधात् (४-१-६३)

१९५. जातिलक्षणं किम् ? - आकृतिग्रहणा जातिः लिङ्गानाञ्च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह।।

१९६. ऊङ्प्रत्ययविधायकं सूत्रं किम् ? - ऊङुतः (४-१-६६)

१९७. ङीन्प्रत्ययविधायकं सूत्रं किम् ? - शार्ङ्गरवाद्यञो ङीन् (४-१-७३)

१९८. चाप्प्रत्ययविधायकसूत्रं किम् ? - यङश्चाप् (४-१-७४)

१९९. तिप्रत्ययविधायकसूत्रं किम् ? - - यूनस्तिः (४-१-७७)

२००. युवतिः इत्यत्र कः प्रत्ययः ? - ति।

२०१. तद्धिताः (४-१-७७) कीदृशं सूत्रम् ? - संज्ञाधिकारः।

२०२. प्रातिपदिकार्थः कः ? - नियतोपस्थितिकः।

२०३. नियतोपस्थितिकः नाम कः ? - यस्मिन् प्रातिपदिके उच्चारिते सति यस्य अर्थस्य नियमेन भानं भवति सः।

२०४. कारके (१-४-२३) कीदृशं सूत्रम् ? - अधिकारसूत्रम्।

२०५. कर्मसंज्ञासूत्रं किम् ? - कर्तुरीप्सिततमं कर्म (१-४-४९)

२०६. किं नाम ईप्सिततमम् ? - आप्तुम् इष्टतमम्।

२०७. अनभिहिते (२-३-१) कीदृशं सूत्रम् ? - अधिकारसूत्रम्।

२०८. द्वितीयाविभक्तिविधायकं सूत्रं किम् ? - कर्मणि द्वितीया (२-३-२)

२०९. अभिधानं कैः भवति ? - प्रायेण तिङ्कृत्तद्धितसमासैः।

२१०. अनीप्सितस्य कारकस्य कर्मसंज्ञाविधायकं सूत्रं किम् ? - तथायुक्तं चानीप्सितम्। (१-४-५०)

२११. अविवक्षितस्य कर्मसंज्ञासूत्रं किम् ? - अकथितं च (१-४-५१)

२१२. 'गां दोग्धि पयः' अत्र किं गौणं कर्म ? - गाम् इति।

२१३. किं नाम प्रत्यवसानम् ? - भक्षणम्।

२१४. शब्दकर्मा कः ? - शब्द एव कर्म यस्य धातोः सः।

२१५. अकर्मकः कः ? - अविद्यमानं कर्म यस्य सः।

२१६. आधारस्य कर्मसंज्ञाविधायकं सूत्रं किम् ? - अधिशीङ्स्थासां कर्म (१-४-४६)

२१७. परितः इति शब्दस्य योगे का विभक्तिः ? - द्वितीया।

२१८. अपिः पदार्थेति सूत्रे पदार्थो नाम कः ? - अप्रयुज्यमानस्य पदान्तरस्य अर्थः।

२१९. किं नाम संभावनम् ? - शक्त्युत्कर्षम् आविष्कर्तुम् अत्युक्तिः।

२२०. को नाम अन्ववसर्गः ? - कामचारानुज्ञा।

२२१. कर्तृसंज्ञासूत्रं किम् ? - स्वतन्त्रः कर्ता (१-४-५४)

२२२. करणसंज्ञासूत्रं किम् ? - साधकतमं करणम् (१-४-४२)

२२३. अनभिहिते कर्तरि करणे च का विभक्तिः ? - तृतीया।

२२४. अपवर्गो नाम कः ? - फलप्राप्तिः।

२२५. अक्ष्णा काणः अत्र केन तृतीया ? - येनाङ्गविकारः (२-३-२०)

२२६. किं नाम हेतुत्वम् ? - द्रव्यादिसाधारणं निर्व्यापारसाधारणं च।

२२७. किं नाम करणत्वम् ? - क्रियामात्रविषयं व्यापारनियतञ्च।

२२८. सम्प्रदानसंज्ञासूत्रं किम् ? -कर्मणा यमभिप्रैति स सम्प्रदानम् (१-४-३२)

२२९. विप्राय गां ददाति अत्र चतुर्थी केन सूत्रेण ?

- चतुर्थी सम्प्रदाने (२-३-१३)

२३०. विप्रश्नो नाम कः ? - विविधः प्रश्नः।

२३१. किं नाम परिक्रयणम् ? - नियतकालं भृत्या स्वीकरणम्।

२३२. उत्पातो नाम कः ? - अशुभसूचकः आकस्मिकः भूतविकारः।

२३३. नमः इति शब्दयोगे का विभक्तिः ? - चतुर्थी।

२३४. अपादानसंज्ञासूत्रं किम् ? - ध्रुवमपायेऽपादानम् (१-४-२४)

२३५. अपायो नाम कः ? - विश्लेषः।

२३६. ग्रामात् आयाति अत्र पञ्चमी केन सूत्रेण ?

- अपादाने पञ्चमी (२-३-२८)

२३७. चोरात् बिभेति अत्र भयहेतुः कः ? - चोरः।

२३८. आख्याता नाम कः ? - अध्यापयिता, वक्ता।

२३९. उपयोगो नाम कः ? - नियमपूर्वकविद्यास्वीकारः।

२४०. जनिकर्ता कः ? - उत्पत्तिकर्ता।

२४१. प्रभवः नाम कः ? - प्रथमप्रकाशस्थानम्।

२४२. का नाम मर्यादा ? - तेन विना।

२४३. को नाम अभिविधिः ? - तेन सह।

२४४. कः शेषपदार्थः?- कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः।

२४५. प्रतियत्नो नाम कः ? - गुणाधानम्।

२४६. व्यवहृपणोः कदा तुल्यार्थता ? - द्यूते क्रयविक्रयव्यवहारे च।

२४७. राज्ञः पुरुषः अत्र षष्ठी केन ? - षष्ठी शेषे (२-३-५०)

२४८. जगतः कर्ता कृष्णः अत्र षष्ठी केन ? - कर्तृकर्मणोः कृति (२-३-६५)

२४९. अधिकरणसंज्ञासूत्रं किम् ? - आधारोऽधिकरणम् (१-४-४५)

२५०. आधारः कतिधा ? - त्रिधा।

२५१. के च ते आधाराः ? - औपश्लेषिकः, वैषयिकः, अभिव्यापकः।

२५२. मोक्षे इच्छा अस्ति अत्र केन सप्तमी ? - सप्तम्यधिकरणे च (२-३-३६)

२५३. किं नाम निर्धारणम् ? - जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणम्।

# द्वितीयभागः

## समासप्रकरणम्

१. समर्थः पदविधिः (२-१-१) कीदृशं सूत्रम् ? - परिभाषासूत्रम्।

२. पदविधिः इति कथं समासः ?

- पदयोः पदानां वा विधिः इति शेषषष्ठ्या समासः।

३. सामर्थ्यं कतिविधम् ? - द्विविधम्।

४. किञ्च तत् ? - व्यपेक्षा, एकार्थीभावः।

५. का नाम व्यपेक्षा ?

- स्वार्थपर्यवसायिनां पदानाम् आकाङ्क्षादिवशात् यः परस्परसम्बन्धः सा।

६. एकार्थीभावो नाम कः ? - प्रक्रियादशायां प्रत्येकम् अर्थवत्त्वेन पृथग् गृहीतानां पदानां विशिष्टैकार्थप्रतिपादकः।

७. अव्ययीभावः कः ? - अनव्ययम् अव्ययं सम्पद्यते इति अथवा पूर्वपदार्थप्रधानः अथवा अव्ययीभावः (२-१-५) इत्यधिकारे विहितः समासः।

८. उपसर्जनसंज्ञासूत्रं किम् ? - प्रथमानिर्दिष्टं समास उपसर्जनम् (१-४-४३)

९. विभक्त्यर्थे किम् उदाहरणम् ? - अधिहरि।

१०. कृष्णस्य समीपम् इत्यर्थे किम् रूपम् ? - उपकृष्णम्।

११. मक्षिकाणाम् अभावः - निर्मक्षिकम्।

१२. 'अतिहिमम्' अस्य विग्रहः कः ? - हिमस्य अत्ययः।

१३. अतिनिद्रम् - निद्रा सम्प्रति न युज्यते इति।

१४. यथार्थाः कति ? - चत्वारः।

१५. के च ते ? - योग्यता, वीप्सा, पदार्थानतिवृत्तिः, सादृश्यम्।

१६. दिनं दिनं प्रति - प्रतिदिनम्।

१७. क्षत्राणां सम्पत्तिः - सक्षत्रम्।

१८ऽ का नाम समृद्धिः ? - ऋद्धेः आधिक्यम्।

१९. का नाम सम्पत्तिः ? - अनुरूपः आत्मभावः।

२०. सतृणम् - तृणमपि अपरित्यज्य।

२१. का नाम वाराणसी ? - वरं च तद् अनः वरानः (श्रेष्ठोदकम्), तस्य अदूरे भवा नगरी।

२२. किं नाम तिष्ठद्गु ? - तिष्ठन्ति गावः यस्मिन् काले सः।

२३. वंशः कतिधा ? कथम् ? च - द्विधा। विद्यया जन्मना च।

२४. 'सप्तगङ्गम्' कः समासः ? - अव्ययीभावः।

२५. 'उपशरदम्' अत्र समासान्तः कः ? - टच्।

२६. अक्ष्णोः परम् - परोक्षम्।

२७. तत्पुरुषः (२-१-२२) कीदृशं सूत्रम् ? - संज्ञाधिकारः।

२८. तत्पुरुषः कः ? - सः पुरुषः, तं पुरुषः, तेन पुरुषः, तस्मै पुरुषः, तस्मात् पुरुषः, तस्य पुरुषः, तस्मिन् पुरुषः अथवा उत्तरपदार्थप्रधानः अथवा तत्पुरुषः (२-१-२२) इत्यधिकारविहितः समासः।

२९. कृष्णश्रितः इत्यत्र कः समासः ? - द्वितीयातत्पुरुषसमासः।

३०. शङ्कुलाखण्डः इत्यत्र केन सूत्रेण समासः ?
- तृतीया तत्कृतार्थेन गुणवचनेन(२-१-३०)

३१. मातृसदृशः इत्यत्र कथं विग्रहः ? - मात्रा सदृशः।

३२. कर्तृकरणे कृता बहुलम् (२-१-३२) इत्यत्र बहुलग्रहणं किमर्थम् ?
- सर्वोपाधिव्यभिचारार्थम्।

३३. किं नाम अधिकार्थवचनम् ? - स्तुतिनिन्दाफलकम् अर्थवादवचनम्।

३४. चतुर्थी तदर्थार्थसूत्रे तदर्थशब्दार्थः कः ? - प्रकृतिविकृतिभावः।

३५. द्विजाय अयम् - द्विजार्थः।

३६. चोरभयम् इत्यत्र केन सूत्रेण समासः ? - पञ्चमी भयेन (२-१-३७)

३७. राजपुरुषः इत्यत्र केन सूत्रेण समासः ? - षष्ठी (२-२-८)

३८. सर्वश्वेतः इत्यस्य कः विग्रहः ? - सर्वेषां श्वेततरः।

३९. सर्वेषां महत्तरः = सर्वमहान्।

४०. नृणां द्विजः श्रेष्ठः इत्यत्र कुतः समासो न ?
- न निर्धारणे (२-२-१०) इति निषेधात्।

४१. तदशिष्यं संज्ञाप्रमाणत्वात् (१-२-५३) इति निर्देशात् किं सिध्यति ?
- अर्थगौरवम् इत्यादि सिध्यति।

४२. राजपूजितः इत्यत्र क्तेन च पूजायाम् (२-२-१२) इति निषेधात् कथं समासः?
- भूते क्तान्तेन सह तृतीयान्तस्य समासः।

४३. ओदनस्य पाचकः इत्यत्र कुतो न समासः ?
- तृजकाभ्यां कर्तरि (२-२-१५) इति निषेधात्।

४४. त्रिभुवनविधातुः इत्यत्र कुतः समासः ? - शेषषष्ठ्या समासः।

४५. पूर्वकाय: इत्यत्र कथं विग्रह: ? - पूर्वं कायस्य।

४६. मध्यरात्र: इत्यत्र क: विग्रह: ? - रात्रे: मध्यम्।

४७. अर्धपिप्पली इत्यत्र केन समास: ? - अर्धं नपुंसकम् (२-२-२)

४८. ईश्वराधीन: इत्यत्र केन समास: ? - सप्तमी शौण्डै: (२-१-४०)

४९. तीर्थकाक: इत्यत्र क: विग्रह: ? केन च समास: ?

- तीर्थे काक: इव। ध्वाङ्क्षेण क्षेपे (२-१-४२)

५०. क्षेपे (२-१-४७) इति सूत्रस्य किम् उदाहरणम् ?

- अवतप्ते नकुलस्थितं त एतत् इति।

५१. स्नातानुलिप्त: इत्यत्र क: विग्रह: ? - पूर्वं स्नात: पश्चात् अनुलिप्त:।

५२. दिक्संख्ये संज्ञायाम् (२-१-५०) इति कीदृशं सूत्रम् ? - नियमसूत्रम्।

५३. पौर्वशाल:, पञ्चगवधन:, पूर्वशालाप्रिय: इत्यत्र केन समास: ?

- तद्धितार्थोत्तरपदसमाहारे च (२-१-५१)

५४. द्विगुसंज्ञासूत्रं किम् ? - संख्यापूर्वो द्विगु: (२-१-५२)

५५. वैयाकरणखसूचि: इति कस्य सूत्रस्योदाहरणम् ? -

कुत्सितानि कुत्सनै: (२-१-५३)

५६. घन इव श्याम: घनश्याम: इत्यत्र केन समास: ?

- उपमानानि सामान्यवचनै: (२-१-५५)

५७. विशेषणं विशेष्येण बहुलम् (२-१-५७) इत्यस्य किमुदाहरणम् ? - नीलोत्पलम्।

५८. पश्चार्ध: इत्यत्र क: विग्रह: ? - अपरश्च असौ अर्धश्च।

५९. शाकप्रिय: पार्थिव: इत्यस्य समस्तं किम् ? - शाकपार्थिव:।

६०. किंराजा इत्यत्र क: विग्रह: ? - कुत्सित: राजा।

६१. किं क्षेपे (२-१-६४) इत्यस्य किम् उदाहरणम् ? - किंराजा।

६२. कर्मधारयसंज्ञासूत्रं किम् ? - तत्पुरुष: समानाधिकरण: कर्मधारय:

६३. गृष्टि: नाम का ? - सकृत् प्रसूता।

६४. धेनु: नाम का ? - नवप्रसूता।

६५. वशा नाम का ? - वन्ध्या।

६६. का नाम वेहत् ? - गर्भघातिनी।

६७. बष्कयणी नाम का ? - अतरुणवत्सा।

६८. युवजरती इत्यत्र क: विग्रह: ? - युवतिश्च असौ जरती च।

६९. युवजरती इति कथं सामानाधिकरण्यम् ? - युवत्यामेव जरतीधर्मारोपात्।

७०. कृष्णसारङ्ग इति केन समासः ? - वर्णो वर्णेन (२-१-६९)

७१. व्यंसकः कः ? - धूर्तः।

७२. उच्चावचम् इत्यस्य कथं विग्रहः ? - उदक् च अवाक्च।

७३. उच्चावचं नाम कोऽर्थः ? - अनेकप्रकारः।

७४. निश्चप्रचम् इत्यत्र कः विग्रहः ? - निश्चितं च प्रचितं च।

७५. कः अकिञ्चनः ? - नास्ति किञ्चन यस्य सः।

७६. अकुतोभयः कः ? - नास्ति कुतो भयं यस्य सः।

७७. किं नाम राजान्तरम् ? - अन्यः राजा।

७८. खादतमोदता इत्यत्र कः विग्रहः ?

- खादत मोदत इत्येवं सततं यत्र अभिधीयते सा।

७९. कः जहिजोडः ? - जहि जोडं जहि जोडम् इत्याभीक्ष्ण्येन यः आह सः।

८०. अब्राह्मणः इति केन समासः ? - नञ् (२-२-६)

८१. अनश्वः इत्यत्र कः आगमः ? - नुट्।

८२. अ पचसि त्वं जाल्म इत्यत्र केन नलोपः ? - नञो नलोपस्तिङि क्षेपे (वा)

८३. नैकधा इति कथं समासः ? - नशब्देन 'सह सुपा' (२-१-४) इति।

८४. किं नाम नक्षत्रम् ? - न क्षरति इति।

८५. नाकः कः ? - न अकम् अस्मिन् इति।

८६. नगाः अगाश्च के ? - पर्वताः।

८७. कुपुरुषः इत्यत्र केन समासः ? - कुगतिप्रादयः (२-२-१८)

८८. अलंकृत्य इत्यत्र केन गतिसंज्ञा ? - भूषणेऽलम् (१-४-६४)

८९. पुरोऽव्ययम् (१-४-६७) इत्यस्य किमुदाहरणम् ? - पुरस्कृत्य।

९०. अच्छगत्य इत्यस्य कोऽर्थः ? - अभिमुखं गत्वा।

९१. अच्छोद्य इत्यस्य कोऽर्थः ? - अभिमुखम् उक्त्वा।

९२. तिरस्कृत्य इत्यत्र केन गतिसंज्ञा ? - विभाषा कृञि (१-४-७२)

९३. किं नाम उपयमनम् ? - विवाहः।

९४. प्राध्वंकृत्य इत्यस्य कोऽर्थः ? - बन्धनेन आनुकूल्यं कृत्वा।

९५. का नाम जीविका ? - अशनपानादिजीवनोपायः।

९६. उपनिषत्कृत्य इत्यत्र कः विग्रहः ? - उपनिषदमिव कृत्वा।

९७. प्राचार्यः कः ? - प्रगतः आचार्यः।

९८. अवकोकिलः कः ? - अवक्रुष्टः कोकिलया।

९९. अध्ययनाय परिग्लानः - पर्यध्ययनः ।

१००. निष्कौशाम्बिः इत्यत्र कः विग्रहः ? - कौशाम्ब्याः निष्क्रान्तः ।

१०१. वृक्षं प्रति इत्यत्र प्रादिसमासः कुतो न ? - कर्मप्रवचनीयानां प्रतिषेधः (वा) ।

१०२. उपपदसंज्ञासूत्रं किम् ? - तत्रोपपदं सप्तमीस्थम् (३-१-९२) ।

१०३. कुम्भकारः इत्यत्र केन उपपदसमासः ? - उपपदमतिङ् (२-२-१९) ।

१०४. अहश्च रात्रिश्च इत्यस्य समस्तं किम् ? - अहोरात्रः ।

१०५. महाराजः इत्यत्र टच् केन ? - राजाहस्सखिभ्यष्टच् (५-४-९१)

१०६. पूर्वाह्णः इत्यत्र कः विग्रहः ? - पूर्वम् अहः ।

१०७. महद् अनः किं रूपम् ? - महानसम्।

१०८. श्वानम् अतिक्रान्तः इत्यस्य किं रूपम् ? - अतिश्वः ।

१०९. एकादश इत्यत्र केन आकारः ?

- प्रागेकादशभ्योऽच्छन्दसि (५-३-४९) इति निर्देशात् ।

११०. अष्टाकपालः इत्यत्र केन आत्वम् ? - अष्टनः कपाले हविषि (वा)

१११. अष्टागवम् इत्यत्र केन आकारः ? - गवि च युक्ते (वा)

११२. द्वादश इत्यत्र केन आत्वम् ?

- द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः (६-३-४७)

११३. द्वाविंशतिः इत्यत्र कः विग्रहः ? - द्वौ च विंशतिश्च इति समाहारद्वन्द्वः ।

द्व्यधिकाः विंशतिः इति तत्पुरुषः ।

११४. त्रयोदश इत्यत्र कः आदेशः ? - त्रिशब्दस्य त्रयस् ।

११५. एकान्नविंशतिः इत्यत्र कः आगमः ? - आदुक् अदुक् वा ।

११६. समाहारे द्विगुद्वन्द्वयोः नपुंसकत्वविधायकं सूत्रं किम् ?

- स नपुंसकम् (२-४-१७)

११७. पञ्चवटी इति समाहारद्विगौ कथं स्त्रीत्वम् ?

- अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः (वा)

११८. त्रिभुवनम् इति समाहारे कथं स्त्रीत्वं न ? - पात्राद्यन्तस्य न (वा)

११९. पाणिन्युपज्ञं नाम किम् ? - पाणिनिना प्रथमं ज्ञायमानम्।

१२०. ईश्वरसभम् इति कथं नपुंसकम् ? - सभा राजाऽमनुष्यपूर्वा (२-४-२३)

१२१. को नाम बहुव्रीहिः ? - बहवः व्रीहयः यस्मिन् सः ।

१२२. बहुव्रीहिसंज्ञासूत्रं किम् ? - शेषो बहुव्रीहिः (२-२-२३)

१२३. प्राप्तोदकः (ग्रामः) इत्यत्र कः विग्रहः ? - प्राप्तम् उदकं यं सः ।

१२४. प्राप्तोदकः इति केन समासः ? - अनेकमन्यपदार्थे (२-२-२४)
१२५. ऊढरथः (वृषभः) इत्यत्र कः विग्रहः ? - ऊढः रथः येन सः ।
१२६. उपहृतपशुः (रुद्रः) इत्यत्र कः विग्रहः ? - उपहृतः पशुः यस्मै सः ।
१२७. उद्धृतौदना (स्थाली) इत्यत्र कः विग्रहः ? - उद्धृत ओदनः यस्याः सा ।
१२८. पीताम्बरः (हरिः) इत्यत्र कः विग्रहः ? - पीतम् अम्बरं यस्य सः ।
१२९. वीरपुरुषकः (ग्रामः) इत्यत्र कः विग्रहः ? - वीराः पुरुषाः यस्मिन् सः ।
१३०. अपुत्रः (पिता) इत्यत्र कः विग्रहः ? - अविद्यमानः पुत्रः यस्य सः ।
१३१. कण्ठेकालः इत्यत्र कः विग्रहः ? - कण्ठेस्थः कालः यस्य सः ।
१३२. उष्ट्रमुखः इत्यत्र कः विग्रहः ? - उष्ट्रमुखमिव मुखं यस्य सः ।
१३३. समासे उत्तरपदं नाम किम् ? - समासस्य चरमावयवः ।
१३४. पूर्वपदं नाम किम् ? - समासस्य प्रथमावयवः ।
१३५. किं नाम भाषितपुंस्कम् ? - भाषितः पुमान् यस्मिन् तत् ।
१३६. दृढभक्तिः इत्यत्र पुंवद्भावः कथम् ?
- सामान्येन नपुंसकत्वमाश्रित्य दृढं भक्तिः यस्य सः इति विग्रहः ।
१३७. हस्तिनीनां समूहः हास्तिकम् इत्यत्र केन पुंवद्भावः ? - भस्याढे तद्धिते (वा)
१३८. सपत्नीशब्दः कथं त्रिधा ? -
१. सपत्नस्य (शत्रोः) स्त्री ।
२. समानः पतिः (विवाहनिबन्धनः) यस्याः सा ।
३. समानः पतिः (स्वामी) यस्याः सा ।
१३९. सर्वाम् आत्मनः इच्छति सर्वकाम्यति इत्यत्र केन पुंवद्भावः ?
- सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः (वा) ।
१४०. मृगक्षीरम् इत्यत्र केन पुंवद्भावः ? - कुक्कुट्यादीनामण्डादिषु च (वा)
१४१. पाचिकाभार्यः इत्यत्र कुतः पुंवद्भावः न ? - न कोपधायाः (६-३-३७)
१४२. उपदशाः इत्यत्र कोऽयं विग्रहः ? - दशानां समीपे ये सन्ति ते ।
१४३. आसन्नविंशाः इत्यत्र कथं विग्रहः ? - विंशतेः आसन्नाः इति ।
१४४. चत्वारिंशतः अधिकाः इत्यस्य समस्तं किम् ? - अधिकचत्वारिंशाः ।
१४५. द्वौ वा त्रयः वा किं रूपम् ? - द्वित्राः ।
१४६. द्विदशाः (विंशतिः) इत्यत्र कथं विग्रहः ? - द्विः आवृत्ताः दश ।
१४७. दक्षिणपूर्वा इत्यत्र कः विग्रहः ? - दक्षिणस्याश्च पूर्वस्याश्च दिशः अन्तरालम् ।
१४८. केशाकेशि इत्यत्र कः विग्रहः ? - केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् ।

१४८. दण्डादण्डि इत्यत्र कथं विग्रहः ? - दण्डैश्च दण्डैश्च प्रहृत्य इंद युद्धं प्रवृत्तम्।

१४९. पुत्रेण सह सपुत्रः इत्यत्र केन समासः ? - तेन सहेति तुल्ययोगे (२-२-२८)

१५०. जलजाक्षी इत्यत्र कथं विग्रहः ? - जलजे इव अक्षिणी यस्याः सा ।

१५१. दीर्घसक्थः इत्यत्र कः समासान्तप्रत्ययः ? - षच्।

१५२. द्विमूर्धः अत्र कः विग्रहः ? - द्वौ मूर्धानौ यस्य सः।

१५३. त्रिमूर्धः अत्र कः समासान्तः ? - षः।

१५४. मृगनेत्राः (रात्रयः) अत्र कः विग्रहः ? मृगः नेता यासां ताः।

१५५. बहिर्लोमः इत्यत्र कः समासान्तः ? - अप्।

१५६. उन्नसः इत्यत्र कः विग्रहः ? - उन्नता नासिका यस्य सः।

१५७. विगता नासिका यस्य सः विग्रः इत्यत्र केन कः आदेशः ?

- वेर्ग्रो वक्तव्यः (वा) इति ग्रादेशः।

१५८. सुप्रातः इत्यत्र कः विग्रहः ? - शोभनं प्रातः यस्य सः।

१५९. शोभनं दिवा यस्य सः कः ? - सुदिवः।

१६०. शोभना मेधा यस्य सः सुमेधाः इत्यत्र कः समासान्तः ? - असिच्।

१६१. कल्याणः धर्मः यस्य सः कल्याणधर्मा इत्यत्र कः समासान्तः ? - अनिच्।

१६२. प्रज्ञुः इत्यत्र कः विग्रहः ? - प्रगते जानुनी यस्य सः।

१६३. युवजानिः इत्यत्र कः विग्रहः ? - युवतिः जाया यस्य सः।

१६४. सुगन्धिः इत्यत्र कः विग्रहः ? - शोभनः गन्धः यस्यं सः।

१६५. व्याघ्रपाद् इत्यत्र कः समासान्तः ? - लोपः।

१६६. शोभनं हृदयं यस्य सः कः ? - सुहृत्।

१६७. व्यूढोरस्कः इत्यत्र कप् केन ? - उरःप्रभृतिभ्यः कप् (५-४-१५१)

१६८. महायशस्कः इत्यत्र केन कप् ? - शेषाद्विभाषा (५-४-१५४)

१६९. का नाम प्रवाणी ? - तन्तुवायशलाका।

१७०. कृतकृत्यः इत्यत्र कृतशब्दस्य पूर्वनिपातः केन ? - निष्ठा (२-२-३६)

१७१. चार्थाः कति ? - चत्वारः।

१७२. चार्थाः के ? - समुच्चयः, अन्वाचयः इतरेतरयोगः, समाहारः।

१७३. समुच्चयः नाम कः ? - परस्परनिरपेक्षस्य अनेकस्य एकस्मिन् अन्वयः।

१७४. अन्वाचयो नाम कः ? - अन्यतरस्य पदस्य आनुषङ्गिकत्वम्।

१७५. इतरेतरयोगो नाम कः ? - मिलितानामन्वयः।

१७६. समाहारो नाम कः ? - परस्परापेक्षितसमूहानाम् एकस्मिन् अन्वयः।

१७७. चार्थेषु क्व समासो न भवति ? - समुच्चये अन्वाचये च।

१७८. राजदन्तः इत्यत्र कः विग्रहः ? - दन्तानां राजा।

१७९. दम्पती इत्यत्र कः विग्रहः ? - जाया च पतिश्च।

१८०. जम्पती इत्यत्र कः आदेशः ? - जायाशब्दस्य जम्भावः।

१८१. हरिहरौ इत्यत्र केन पूर्वनिपातः ? - द्वन्द्वे घि (२-२-३२)

१८२. अजाद्यदन्तम् (२-२-३३) इत्यस्य किमुदाहरणम् ? - ईशकृष्णौ।

१८३. अल्पाच्तरम् (२-२-३४) इत्यत्र किं निपातितम् ?

- स्वार्थे तरप् कुत्वाभावश्च।

१८४. पाणिपादम् इत्यत्र कः समासः ? - द्वन्द्वः।

१८५. रथिकाश्वारोहम् इत्यस्य कः विग्रहः ? - रथिकानामश्वारोहाणां च समाहारः।

१८६. अहिनकुलम् इत्यत्र केन एकवद्भावः ? - येषां च विरोधः शाश्वतिकः (२-४-९)

१८७. शीतोष्णे / शीतोष्णम् इत्यत्र केन एकवत् ?

- विप्रतिषिद्धं चानधिकरणवाचि (२-४-१३)

१८८. मातापितरौ इत्यत्र केन कः आदेशः ?

- आनङ् ऋतो द्वन्द्वे (६-३-२५) - आनङ्।

१८९. मित्रावरुणौ इत्यत्र केन आनङ् - देवताद्वन्द्वे च (६-३-२६)

१९०. द्यावाभूमी इत्यत्र कः विग्रहः ? - द्यौश्च भूमिश्च।

१९१. दिवस्पृथिव्यौ इत्यत्र कः आदेशः ? - दिवस्।

१९२. मातरपितरौ इत्यत्र आरङादेशः केन निपात्यते ?

- मातरपितरावुदीचाम् (६-३-३२)

१९३. वाक्त्वचम् इत्यत्र केन टच् ? - द्वन्द्वाच्चुदषहान्तात्समाहारे (५-४-१०६)

## एकशेषप्रकरणम्

१९४. पुरुषौ इत्यत्र कथम् एकशेषः ? - स्त्री च पुरुषश्च।

१९५. हंसौ इत्यत्र केन एकशेषः ? - पुमान् स्त्रिया (१-२-६७)

१९६. पुत्रौ इत्यत्र कः विग्रहः ? - पुत्रश्च दुहिता च।

१९७. पिता मात्रा (१-२-७०) इत्यस्य किमुदाहरणम् ? - पितरौ।

१९८. एकशेषे कृते द्वन्द्वः कुतो न ? - अनेकसुबन्तत्वाभावात्।

१९९. स च देवदत्तश्च इत्यस्य किं रूपम् ? - तौ।

२००. सा च सीता च ते इत्यत्र केन एकशेषः ?

- त्यदादीनि सर्वैर्नित्यम् (१-२-७२)

## सर्वसमासशेषप्रकरणम्

२०१. कति वृत्तयः ? - पञ्च।

२०२. ताः वृत्तयः काः ? - कृत्, तद्धितः, समासः, एकशेषः, सनाद्यन्ता धातवः।

२०३. का नाम वृत्तिः ? - परार्थाभिधानम्।

२०४. विग्रहो नाम कः ? - वृत्त्यर्थावबोधकं वाक्यम्।

२०५. विग्रहः कतिविधः? - द्विविधः।

२०६. लौकिकः विग्रहः कः ? - परिनिष्ठितः व्याकरणसंस्कृतः साधुः।

२०७. अलौकिकः कः ? - प्रक्रियानिर्वाहकः प्रयोगानर्हः असाधुः।

२०८. समासः कतिविधः ? - प्रायेण चतुर्विधः।

२०९. के ते ? - अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः, द्वन्द्वः।

२१०. बुधैः समासः कतिविधः उक्तः ? - षड्विधः।

सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा।
सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः।।

## सर्वसमासान्तप्रकरणम्।

२११. राजपथः इत्यत्र कः समासान्तः ? - अ।

२१२. विष्णोः पूः इत्यस्य किं रूपम् ? - विष्णुपुरम्।

२१३. द्वीपम् इत्यस्य कः विग्रहः ? - द्वयोः पार्श्वयोः गताः आपः यस्मिन्।

२१४. पञ्चानां नदीनां समाहारः पञ्चनदम् इत्यत्र कः समासान्तः ? - अच्।

२१५. गवाम् अक्षि इव गवाक्षः इत्यत्र केन अच् ? - अक्ष्णोऽदर्शनात् (५-४-७६)

२१६. अचतुरः इत्यत्र कः विग्रहः ? - अविद्यमानानि चत्वारि यस्य सः।

२१७. निश्चितं श्रेयः इत्यस्य किं रूपम् ? - निःश्रेयसम्।

२१८. ब्रह्मवर्चसम् इत्यत्र केन अच् ? - ब्रह्महस्तिभ्यां वर्चसः (५-४-७८)

२१९. अन्धतमसम् इत्यत्र केन अच् ? - अवसमन्धेभ्यस्तमसः (५-४-७९)

२२०. उपसर्गादध्वनः (५-४-८५) इत्यस्य किम् उदाहरणम् ? - प्राध्वः।
२२१. सुराजा इत्यत्र कुतो न टच् ? - न पूजनात् (५-४-६९) इति निषेधात्।
२२२. कुत्सितः राजा किं भवति ? - किंराजा।
२२३. अपथम् / अपन्थाः इति केन ? - पथो विभाषा (५-४-७२)

## अलुक्समासप्रकरणम्

२२३. स्तोकान्मुक्तः इत्यत्र केन अलुक् (६-३-२)
२२४. आत्मनेपदम् इत्यत्र केन अलुक् ? - वैयाकरणाख्यायां चतुर्थ्याः (६-३-७)
२२५. परस्य च (६-३-८) इत्यस्य किमुदाहरणम् ? - परस्मैपदम्।
२२६. युधिष्ठिरः इत्यत्र केन अलुक् ? - गवियुधिभ्यां स्थिरः (८-३-९५)
२२७. दिवं स्पृशतीति दिविस्पृक् इत्यत्र केन अलुक् ?
- हृद्द्युभ्याञ्च (वा)
२२७. दिवं स्पृशतीति दिविस्पृक् इत्यत्र कर्मार्थः कः ? - अधिकरणम्।
२२८. कण्ठेकालः इत्यत्र केन अलुक् ?
- अमूर्धमस्तकात्स्वाङ्गादकामे (६-३-१२)
२२९. कर्णेजपः / कर्णजपः इत्यत्र केन वा अलुक् ?
- तत्पुरुषे कृति बहुलम् (६-३-१४)
२३०. पश्यतोहरः कः ? - पश्यन्तम् अनादृत्य यः हरति।
२३१. दिशोदण्डः अत्र केन अलुक् ? - वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु (वा)
२३२. देवानांप्रियः (मूर्खः) इत्यत्र केन अलुक् ? - देवानां प्रिय इति च मूर्खे (वा)
२३३. पितुःपुत्रः अत्र केनालुक् ? - ऋतो विद्यायोनिसम्बन्धेभ्यः (६-३-२३)

## समासाश्रयविधिप्रकरणम्

२३४. हृदयस्य इदं किम् ? - हार्दम्।
२३५. पदातिः कः ? - यः पादाभ्याम् अतति इति।
२३६. अजायाः भावः अजत्वम् / अजात्वम् इत्यत्र केन ह्रस्वः ?
- त्वे च (६-३-६४)
२३८. तिमिं गिलतीति तिमिङ्गिलः अत्र केन मुम् ? - गिलेऽगिलस्य (वा)
२३९. रात्रेः कृति विभाषा (६-३-७२) अस्य किमुदाहरणम् ?

- रात्रिञ्चरः। रात्रिचरः।

२४०. समाने तीर्थे वासी सतीर्थ्यः कः ? - एकगुरुकः।

२४१. ज्योतिषः स्तोमः ज्योतिष्टोमः इत्यत्र षः केन ?

- ज्योतिरायुषस्तोमः (८-३-८३)

२४२. कदश्वः कः ? - कुत्सितः अश्वः।

२४३. कदन्नम् इत्यत्र केन कत् ? - कोः कत्तत्पुरुषेऽचि (६-३-१०१)

२४४. पृषोदरम् इत्यत्र केन तलोपः ? - पृषोदरादीनि यथोपदिष्टम् (६-३-१०९)

२५४. कृषीवलः इत्यत्र दीर्घः केन ? - वले (६-३-११८)

२४६. प्रतिकारः/प्रतीकारः अत्र वा दीर्घः केन ?

- उपसर्गस्य धञ्यमनुष्ये बहुलम् (६-३-१२२)

२४७. विश्वामित्रः अत्र केन दीर्घः ? - मित्रे चर्षौ (६-३-१३०)

२४८. आश्चर्यम् इत्यत्र केन् सुट् ? - आश्चर्यमनित्ये (६-१-१४७)

२४९. हरिश्चन्द्रः इत्यत्र केन कः निपात्यते ?

- प्रस्कण्वहरिश्चन्द्रावृषी (६-१-१५३) इति सुट्।

२५०. पारस्करः कः ? - पारं करोति।

२५१. तत् (चौर्यं) करोति कः ? - तस्करः।

२५२. बृहत्याः (वाचः) पतिः कः ? - बृहस्पतिः।

२५३. प्रायश्चित्तम् इत्यत्र केन सुट् ? - प्रायस्य चित्तिचित्तयोः (वा)

## तद्धितप्रकरणम्

१. समर्थानां प्रथमाद्वा (४-१-८२) अत्र सामर्थ्यं कीदृशम् ?

- कृतसन्धिकार्यत्वम्।

२. गाणपतम् अत्र कः प्रत्ययः ? - अण्।

३. आदित्यः अस्य को विग्रहः ? - अदितेः आदित्यस्य वा अपत्यादिः।

४. बाहीकः इत्यत्र केन कः प्रत्ययः ? - ईकक्च (वा) - ईकक्।

५. अश्वत्थामः कः ? - अश्वस्य इव स्थामा स्थितिः यस्य सः।

६. पौस्नः इत्यत्र कः प्रत्यय ? - स्नञ्।

७. स्त्रैणः इत्यत्र कः प्रत्ययः ? - नञ्।

८. स्त्रीवत् इत्यत्र कुतो न नञ् ?

- स्त्री पुंवच्च (१-२-६६) इति ज्ञापकसामान्यापेक्षत्वात्।

९. औपगवः इत्यत्र केन अण् ? - तस्यापत्यम् (४-१-९२)

१०. गोत्रसंज्ञासूत्रं किम् ? - अपत्यं पौत्रप्रभृति गोत्रम् (४-१-१६२)

११. युवसंज्ञासूत्रं किम् ? - जीवति तु वंश्ये युवा (४-१-६३)

१२. एको गोत्रे (४-१-९३) कीदृशं सूत्रम् ? - नियमसूत्रम्।

१३. दाशरथिः इत्यत्र केन इञ् ? - अत इञ् (४-१-९५)

१४. वैयासकिः इत्यत्र कः आगमः ? - ऐच्।

१५. पुत्रस्य अपत्यं पौत्रः इत्यत्र केन अञ्? -अनृष्यानन्तर्ये बिदादिभ्योऽञ् (४-१-१०४)

१६. गार्ग्यः इत्यत्र केन यञ् ? - गर्गादिभ्यो यञ् (४-१-१०५)

१७. द्वैमातुरः इत्यत्र केन उदादेशः ? - मातुरुत्संख्यासंभद्रपूर्वायाः (४-१-११५)

१८. के ऋषयः ? - तपोबलवशात् प्रलीनान् वेदान् ये अर्षन्ति प्राप्नुवन्ति।

१९. कानीनः कः ? - कन्यायाः अपत्यम्।

२०. कनीनादेशः केन सूत्रेण ? - कन्यायाः कनीन च (४-१-११६)

२१. वैनतेयः इत्यत्र ढक् केन ? - स्त्रीभ्यो ढक् (४-१-१२०)

२२. गाङ्गेयः इत्यत्र केन ढक् ? - शुभ्रादिभ्यश्च (४-१-१२३)

२३. कौलटिनेयः इत्यत्र का कुलटा ? - कुलानि अटति या भिक्षुकी।

२४. कौलटेरः अत्र का कुलटा ? - या व्यभिचारार्थं कुलानि अटति।

२५. चाटकैरः इत्यत्र कः प्रत्ययः ? - ऐरक्।

२६. गौधेरः इत्यत्र कः प्रत्ययः ? - द्रक्।

२७. के क्षुद्राः ? - अङ्गहीनाः शीलहीनाश्च।

२८. राज्ञः अपत्यं राजन्यः अत्र केन यत् ? - राजश्वशुराद्यत् (४-४-१३७)

२९. ब्राह्मणः कः ? - ब्रह्मणः अपत्यम्।

३०. क्षत्रियः अत्र कः प्रत्ययः ? - घः।

३१. कुलात्खः (४-४-१३९) अस्य किमुदाहरणम् ? - कुलीनः।

३२. रैवतिकः इत्यत्र कः आदेशः ? - इक आदेशः।

३३. मानुषः अत्र कः आगमः ? - षुक्।

३४. मनुष्यः अत्र कः प्रत्ययः ? - यत्।

३५. तद्राजसंज्ञासूत्रं किम् ? - ते तद्राजाः (४-१-१७४)

३६. उपोत्तमं नाम किम् ? - उत्तमस्य समीपम्।

३७. किं नाम उत्तमम् ? - त्र्यादीनामन्त्यम्।

३८. पुष्येण युक्तं पौषम् इत्यत्र केन अण् ? - नक्षत्रेण युक्तः कालः (४-२-३)
३९. वामदेव्यम् अस्य कः विग्रहः ? - वामदेवेन दृष्टं साम।
४०. स्थाण्डिलः भिक्षुः अत्र केनाण् ? - स्थण्डिलाच्छयितरि व्रते (४-२-१५)
४१. किं नाम उदश्वित् ? - उदकेन श्वयति वर्धते इति।
४२. कः आशिषिकः ? - आशिषा चरति।
४३. दौष्कः कः ? - दोर्भ्यां चरति।
४४. ऐन्द्रं हविः अत्र केन अण् ? - साऽस्य देवता (४-२-२४)
४५. कायम् इत्यत्र कः विग्रहः ? - कः ब्रह्मा देवता अस्य।
४६. वायव्यम् अत्र केन यत् ? - वाय्वृतुपित्रुषसो यत् (४-२-३१)
४७. आग्निमारुतम् इत्यत्र केन उभयपदवृद्धिः ? - देवताद्वन्द्वे च (७-३-२१)
४८. पितृव्यः इत्यत्र कः प्रत्ययः ? - व्यत्।
४९. मातुलः अत्र कः प्रत्ययः ? - डुलच्।
५०. मातामहः अत्र कः प्रत्ययः ? - डामहच्।
५१. काकानां समूहः काकम् अत्र केनाण् ? - तस्य समूहः (४-२-३७)
५२. यौवनम् अत्र कः विग्रहः ? - युवतीनां समूहः।
५३. ब्राह्मणानां समूहः अस्य किं रूपम् ? - ब्राह्मण्यम्।
५४. जनता अत्र केन तल् ? - ग्रामजनबन्धुभ्यस्तल् (४-२-४३)
५५. धूमानां समूहः धूम्या अत्र केन यः ? - पाशादिभ्यो यः (४-२-४९)
५६. खलगोरथात् (४-२-५०) अस्य किमुदाहरणम् ? - रथ्या।
५७. सौभद्र इत्यत्र कः विग्रहः ? - सुभद्रा प्रयोजनमस्य संग्रामस्य।
५८. भारतः अत्र कः विग्रहः ? - भरताः योद्धारः अस्य संग्रामस्य।
५९. दाण्डा का ? - दण्डः प्रहरणमस्यां क्रीडायाम्।
६०. वैयाकरणः कः ? - व्याकरणम् अधीते वेद वा।
६१. नैयायिकः इत्यत्र केन ठक् ? - क्रतूक्थादिसूत्रान्ताट्ठक् (४-२-६०)
६२. शिक्षामधीते वेद वा शिक्षकः अत्र केन वुन् ? - क्रमादिभ्यो वुन् (४-२-६१)
६३. अथर्वाणमधीते आथर्वणिकः अत्र केन ठक् ? - वसन्तादिभ्यष्ठक् (४-२-६३)
६४. औदुम्बरः कः ? - उदुम्बराः सन्ति अस्मिन् देशे।
६५. का कौशाम्बी ? - कुशाम्बेन निर्वृत्ता नगरी।
६६. शैबः कः ? - शिबीनां निवासः देशः।
६७. किं नाम वैदिशम् ? - विदिशाया अदूरभवं नगरम्।

६८. वेतसाः सन्ति अस्मिन् वेतस्वान् अत्र कः प्रत्ययः ? - ड्मतुप्।
६९. चक्षुषा गृह्यते चाक्षुषम् अत्र केनाण् ? - शेषे (४-२-९२)
७०. राष्ट्रियः अत्र केन घप्रत्ययः ? - राष्ट्रावारपाराद्घखौ (४-२-९३)
७१. ग्रामीणः अत्र केन कः प्रत्ययः ? - ग्रामाद्यखञौ (४-२-४४) खञ्।
७२. दाक्षिणात्यः इत्यत्र केन त्यक् ? - दक्षिणापश्चात्पुरसस्त्यक् (४-२-९८)
८३. द्युप्रागपागुदक्प्रतीचो यत् (४-२-१०१) अस्य किमुदाहरणम् ? - दिव्यम्।
७४. तत्रत्यः अत्र कः प्रत्ययः ? - त्यप्।
७५. अमात्यः अत्र केन त्यप् ? - अव्ययात्त्यप् (४-२-१०४)
७६. नित्यः इत्यत्र केन त्यप् ? - त्यब्नेर्ध्रुव इति वक्तव्यम् (वा)
७७. औत्तराहः कः ? - उत्तरस्मात् आगतः उत्तरस्मिन् भवो वा।
७८. औत्तराहः अत्र केन कः प्रत्ययः ? - उत्तरादाहञ् (वा) - आहञ्।
७९. वृद्धसंज्ञासूत्रं किम् ? - वृद्धिर्यस्याचामादिस्तद्वृद्धम् (१-१-७३)
८०. शालीयः अत्र केन छप्रत्ययः ? - वृद्धाच्छः (४-२-११४)
८१. भावत्कः इत्यत्र कः प्रत्ययः ? - ठक्।
८२. काशिका अत्र कः प्रत्ययः ? - ञिठ्।
८३. नागरकः इत्यत्र केन वुञ् ? - नगरात्कुत्सनप्रावीण्ययोः (४-२-१२८)
८४. स्वकीयम् अत्र कः प्रत्ययः आगमश्च ? - छप्रत्ययः। कुगागमः।
८५. राजकीयम् अत्र केन छः ? - राज्ञः क च (४-२-१४०)
८६. युष्मदीयः कः ? - युवयोः युष्माकं वा अयम्।
८७. आस्माकीनः इत्यत्र कः आदेशः प्रत्ययश्च ? - अस्माकादेशः। खञ्।
८८. तावकीनः अत्र केन तावकादेशः ? - तवकममकावेकवचने (४-३-३)
८९. मामकः कः ? - मम अयम्।
९०. प्रत्ययोत्तरपदयोश्च (७-२-९८) अनेन किं विधीयते ? - त्व, म इत्यादेशौ।
९१. मध्यमः अत्र केन मः ? - मध्यान्मः (४-३-८)
९२. मासिकम् अत्र केन ठञ् ? - कालाट्ठञ् (४-३-११)
९३. निशाप्रदोषाभ्याञ्च (४-३-१४) अस्य किमुदाहरणम् ? - प्रादोषिकम्।
९४. आदिमम् इत्यत्र कः प्रत्ययः ? - डिमच्।
९५. अन्तिमम् अत्र केन डिमच् ? - अन्ताच्च (वा)
९६. शारदाः अत्र कः विग्रहः ? - शरदि पच्यन्ते शालयः।
९७. मासे देयम् ऋणं किम् ? - मासिकम्।

९८. कण्ठे भवं कण्ठ्यम् अत्र केन यत् ? - शरीरावयवाच्च (४-३-५५)
९९. गम्भीरे भवं गाम्भीर्यम् अत्र केन यः ? - गम्भीराञ्यः (४-३-५८)
१००. पाञ्चजन्यम् अत्र केन ञ्यः ? - पञ्चजनादुपसंख्यानम् (वा)
१०१. अध्यात्मं भवम् आध्यात्मिकम् अत्र केन ठञ् ?- अध्यात्मादेष्ठञिष्यते (वा)
१०२. आधिदैविकम् अत्र उभयपदवृद्धिः केन ? - अनुशतिकादीनाञ्च (७-३-२०)
१०३. अधिभूतं भवं किम् ? - आधिभौतिकम्।
१०४. इहलोके भवं किम् ? - ऐहलौकिकम्।
१०५. पारलौकिकम् अस्य विग्रहः कः ? - परलोके भवम्।
१०६. सुपां व्याख्यानः ग्रन्थः सौपः अत्र केनाण् ?
- तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः (४-३-६६)
१०७. पितुः आगतं पैतृकम् अत्र केन ठञ् ? - पितुर्यच्च (४-३-७९)
१०८. पाणिनीयम् अत्र कः विग्रहः ? - पाणिनिना प्रोक्तम्।
१०९. तैत्तिरीयाः के ? प्रत्ययः कः ? - तित्तिरिणा प्रोक्तमधीयते । छण्।
११०. वाररुचः कः ? - वररुचिना कृतः ग्रन्थः।
१११. धान्दोग्यं किम् ? - धन्दोगानां धर्मः आम्नायः वा।
११२. अश्मनः विकारः कः ? - आश्मः।
११३. आम्रमयम् अत्र केन मयट् ? - नित्यं वृद्धशरादिभ्यः (४-३-१४४)
११४. गोः पुरीषं गोमयम् अत्र केन मयट् ? - गोश्च पुरीषे (४-३-१४५)
११५. गव्यम् अत्र केन यत् ? - गोपयसोर्यत् (४-३-१६०)
११६. स्वागतिकः कः ? - यः स्वागतमित्याह।
११७. औडुपिकः कः ? - उडुपेन तरति।
११८. नाविकः अत्र केन ठन् ? - नौद्व्यचष्ठन् (४-४-७)
११९. शकटेन चरति शाकटिकः अत्र केन ठक् ? - चरति (४-४-८)
१२०. रथेन चरति रथिकः अत्र केन ष्ठन् ? - पर्पादिभ्यः ष्ठन् (४-४-१०)
१२१. पर्पः कः ? - येन पीठेन पङ्गवश्चरन्ति सः।
१२२. वैतनिकः कः ? - वेतनेन जीवति।
१२३. कृत्रिमम् इत्युंक्ते किम् ? - क्रियया निर्वृत्तम्।
१२४. पाकेन निर्वृत्तं पाकिमम् अत्र कः प्रत्ययः ? - इमप्।
१२५. सामाजिक कः ? - समाजं रक्षति।
१२५. शाब्दिकः कः ? - शब्दं करोति।

१२६. प्रतिपदं गृह्णाति प्रातिपदिकम् अत्र केन ठक् ?
- पदोत्तरपदं गृह्णाति (४-४-३९)

१२७. धार्मिकः कः ? - धर्मं चरति।
१२८. मार्दङ्गिकः कः ? - मृदङ्गवादनं शिल्पमस्य।
१२९. शाक्तीकः नाम कः ? - शक्तिः प्रहरणमस्य।
१३०. आस्तिकः कः ? - अस्ति देवः इति मतिः यस्य सः।
१३१. नास्तिकः अत्र केन ठक् ? - अस्ति नास्ति दिष्टं मतिः (४-४-६०)
१३२. किं नाम छत्त्रम् ? - गुरोः दोषाणामावरणम्!
१३३. छात्त्रः कः ? - छत्त्रं शीलमस्य।
१३४. आग्रभोजनिकः कः ? - अग्रभोजनं नियतं दीयते अस्मै इति।
१३५. आकरः कः ? - रत्नाद्युद्भवस्थानम्।
१३६. नगरे नियुक्तः नागरिकः अत्र केन ठक् ? - तत्र नियुक्तः (४-४-६९)
१३७. प्रासङ्गो नाम कः ? - वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते सः।
१३८. वश्यः कः ? - परेच्छानुसारी।
१३९. वयसा तुल्यः कः ? - वयस्यः।
१४०. मूलेन आनाम्यं किम् ? - मूल्यम्।
१४१. तुल्यं किम् ? - तुलया सम्मितम्।
१४२. न्याय्यम् इत्यत्र केन यत् ? - धर्मपथ्यर्थन्यायादनपेते (४-४-९२)
१४३. धर्म्यं किम् ? - धर्मादनपेतम्।
१४४. औरसः कः ? - उरसा निर्मितः पुत्रः।
१४५. सार्वजनीनः अत्र केन खञ् ? - प्रतिजनादिभ्यः खञ् (४-४-९९)
१४६. पथि साधु पाथेयम् अत्र केन ढञ् ?
- पथ्यतिथिवसतिस्वपतेर्ढञ् (४-४-१०४)

१४७. सभ्यः कः ? - सभायां साधुः।
१४८. सतीर्थ्यः कः ? - समाने तीर्थे गुरौ वसतीति सतीर्थ्यः।
१४९. सतीर्थ्यः अत्र केन यत् ? - समानतीर्थे वासी (४-४-१०७)
१५०. शून्यम् / शुन्यम् अत्र कस्मिन्नर्थे यत् ? - शुने हितम्।
१५१. दन्ताय हितं दन्त्यम् अत्र केन यत् ? - शरीरावयवाद्यत् (५-१-६)
१५२. नासिकायै हितं नस्यम् अत्र केन नस् ? - नस्नासिकायाः (वा)
१५३. आत्मन्विश्वजनभोगोत्तरपदात्खः (५-१-९) उदाहरणं किम् ?

- आत्मनीनम्।

१५४. सार्वजनिकः इत्यत्र केन ठञ् ? - सर्वजनाट्ठञ् सश्च (वा)

१५५. सर्वजनाय हितं किम् ? - सर्वजनीनम्।

१५६. शतेन क्रीतं शतिकं शत्यं वा अत्र केन ठन्यतौ ?

- शताच्च ठन्यतावशते (५-१-२१)

१५७. सार्वभौमः कः ? - सर्वभूमेः निमित्तं संयोगः उत्पातो वा।

१५८. सार्वभौमः कः ? - सर्वभूमेः ईश्वरः सर्वभूमौ विदितः वा।

१५९. लोकेषु विदितः लौकिकः अत्र केन ठञ् ? - लोकसर्वलोकाट्ठञ् (५-१-४४)

१६०. वापः कः ? - उप्यते अस्मिन् इति वापः = क्षेत्रम्।

१६१. का वृद्धिः ? - उत्तमर्णेन मूलातिरिक्तं ग्राह्यम्।

१६२. आयः कः ? - ग्रामादिषु स्वामिग्राह्यः भागः।

१६३. लाभः कः ? - विक्रेत्रा मूल्यादधिकग्राह्यम्।

१६४. शुल्कः कः ? - रक्षानिर्वेशः राजभागः।

१६५. उपदा नाम का ? - उत्कोचः।

१६६. दण्डमर्हति दण्ड्यः अत्र केन यत् ? - दण्डादिभ्यः (५-१-६६)

१६७. ऋत्विजम् अर्हति कः ? - आर्त्विजीनः यजमानः।

१६८. यज्ञमर्हति यज्ञियः अत्र केन घः ? - यजर्त्विभ्यां घखञौ (५-१-७१)

१६९. सांशयिकः कः ? - संशयमापन्नः।

१७०. पन्थानं गच्छति पथिकः अत्र केन कः प्रत्ययः ?

- पथः ष्कन् (५-१-७५) ष्कन्।

१७१. अह्ना निर्वृत्तम् आह्निकम् अत्र केन ठञ् ? - तेन निर्वृत्तम् (५-१-७९)

१७२. वेषः कः ? - कृत्रिमः आकारः।

१७३. सांग्रामिकः कः ? - संग्रामाय प्रभवति।

१७४. योगाय प्रभवति कः ? - योग्यः / यौगिकः।

१७५. कर्मणे प्रभवति कार्मुकम् अत्र केन उकञ्?- कर्मण उकञ् (५-१-१०३)

१७६. किं नाम सामयिकम् ? - समयः प्राप्तः अस्य।

१७७. काल्यं नाम किम् ? - कालः प्राप्तः अस्य।

१७८. ऐकागारिकः कः ? - एकमसहायमगारं प्रयोजनमस्य मुमुषिषोः सः।

१७९. ब्राह्मणवदधीते अत्र केन वतिः ? - तेन तुल्यं क्रिया चेद्वतिः (५-१-११५)

१८०. भावः कः ? - प्रकृतिजन्यबोधे प्रकारः।

१८१. गोत्वम् अत्र केन त्वप्रत्ययः ? - तस्य भावस्त्वतलौ (५-१-११९)

१८२. प्रथिमा अस्य कः विग्रहः ? - पृथोः भावः।

१८३. दृढस्य भावः दार्ढ्यम् अत्र कः प्रत्ययः ? - ष्यञ्।

१८४. चातुर्वर्ण्यम् अत्र केन ष्यञ् ? - चतुर्वर्णादीनां स्वार्थे उपसंख्यानम् (वा)

१८५. पौरोहित्यम् अत्र केन यक् ? - पत्यन्तपुरोहितादिभ्यो यक् (५-१-१२८)

१८६. गुणवचनब्राह्मणादिभ्यः कर्मणि च (५-१-१२४) अस्य किमुदाहरणम् ?

- जडस्य कर्म भावः वा जाड्यम्।

१८७. सख्युर्भावः सख्यम् अत्र केन यः ? - सख्युर्यः (५-१-१२६)

१८८. सहायस्य भावः साहायकम् अत्र केन वुञ् ? - सहायाद्वा (वा)

१८९. सर्वाङ्गं व्याप्नोति इति किं रूपम् ? - सर्वाङ्गीणः।

१९०. प्रपदं किम् ? - पादस्य अग्रम्।

१९१. परम्परीणः कः ? - परांश्च परतरांश्च अनुभवति।

१९२. आगवीनः कः ? - गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति सः।

१९३. विद्यया वित्तः (प्रसिद्धः) कः ? - विद्याचुञ्चुः।

१९४. विद्याचणः अत्र केन चणप् ? - तेन वित्तश्चुञ्चुप्चणपौ (५-२-२६)

१९५. विशालम् अत्र कः प्रत्ययः ? - शालच्।

१९६. संकटम् अत्र केन कटच् ? - सम्प्रोदश्च कटच् (५-२-२९)

१९७. उपत्यका का ? - पर्वतस्य आसन्नं स्थलम्।

१९८. कर्मणि घटते कर्मठः अत्र केन अठच् ? - कर्मणि घटोऽठच् (५-२-३५)

१९९. सुखमस्य संजातं सुखितमत्र केन इतच् ?

- तदस्य संजातं तारकादिभ्य इतच् (५-२-३६)

२००. ऊरुद्वयसं किम् ? - ऊरू प्रमाणमस्य ।

२०१. यावान् अत्र कः प्रत्ययः ? - वतुप्।

२०२. तावान् अत्र कः विग्रहः ? - तत् परिमाणमस्य।

२०३. कति अस्य कः विग्रहः ? - का संख्या एषां ते।

२०४. पञ्चतयम् अत्र केन तयप् ? - संख्याया अवयवे तयप् (५-२-४२)

२०५. एकादशानां पूरणः एकादशः अत्र कः प्रत्ययः ? - डट्।

२०६. पञ्चमः अत्र केन मट् ? - नान्तादसंख्यादेर्मट् (५-२-४९)

२०७. षष्ठः अत्र कः आगमः ? - थुक्।

२०८. द्वयोः पूरणः द्वितीयः अत्र केन तीयः ? - द्वेस्तीयः (५-२-५४)

२०९. विंशतितमः अत्र कः आगमः ? - तमट्।
२१०. शीतं करोति शीतकः कः ? - अलसः।
२११. श्रोत्रियः कः ? - यः छन्दः अधीते।
२१२. गोमान् अत्र केन मतुप् ? - तदस्यास्त्यस्मिन्निति मतुप् (५-२-९४)
२१३. मतुबादयः कस्मिन्नर्थे भवन्ति ? - भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः।। (वा)
२१४. राजन्वान् कस्मिन्नर्थे ? - सौराज्ये।
२१५. वत्सलः इत्यत्र कः प्रत्ययः ? - लच्।
२१६. अङ्गना का ? - कल्याणानि अङ्गानि अस्याः।
२१७. लक्ष्मणः कः ? - लक्ष्मीः अस्य अस्तीति।
२१८. दन्तुरः कः ? - उन्नताः दन्ताः सन्ति अस्य।
२१९. केशवः कः ? - केशाः सन्ति अस्य।
२२०. कृषीवलः इत्यत्र केन वलच् ? - रजःकृष्यासुतिपरिषदो वलच् (५-२-११२)
२२१. दण्डी अत्र केन इनिः ? - अत इनिठनौ (५-२-११५)
२२२. तुन्दिलः अत्र कः प्रत्ययः ? - इलच्।
२२३. मायावी अत्र केन विनिः ? - अस्मायामेधास्रजो विनिः (५-२-१२१)
२२४. हृदयालुः अत्र केन चालुः ? - हृदयाच्चालुरन्यतरस्याम् (वा)
२२५. वाग्मी अत्र केन ग्मिनिः ? - वाचो ग्मिनिः (५-२-१२४)
२२६. वाचालः वाचाटः च केन ? - आलजाटजौ बहुभाषिणि (५-२-१२५)
२२७. स्वामी (स्वमस्यास्तीति) इति केन ? - स्वामिन्नैश्वर्ये (५-२-१२६)
२२८. हस्ती (गजः) अत्र केन इनिरेव ? - हस्ताज्जातौ (५-२-१३३)
२२९. यतः अत्र केन तसिल् ? - पञ्चम्यास्तसिल् (५-३-७)
२३०. तत्र अत्र केन त्रल् ? - सप्तम्यास्त्रल् (५-३-१०)
२३१. सदा इत्यत्र केन दा ? - सर्वैकान्यकिंयत्तदः काले दा (५-३-१५)
२३२. अधुना अत्र कः प्रत्ययः ? - अधुना।
२३३. समाने अहनि किं रूपम् ? - सद्यः।
२३४. पूर्वस्मिन् वत्सरे किं रूपम् ? - परुत्।
२३५. पूर्वतरे वत्सरे किं रूपम् ? - परारि।
२३६. अस्मिन् संवत्सरे किं रूपम् ? - ऐषमः।
२३७. तेन प्रकारेण तथा अत्र केन थाल् ? - प्रकारवचने थाल् (५-३-२३)

२३८. पञ्चधा इत्यत्र केन धा ? - संख्याया विधार्थे धा (५-३-४२)

२३९. द्वैधम् अत्र क आदेशः ? - धमुञ्।

२४०. द्वेधा अत्र क आदेशः ? - एधाच्।

२४१. एकादाकिनिच्चासहाये (५-३-५२) अस्य किमुदाहरणम् ? - एकाकी।

२४२. भूतपूर्वः कुलपतिः कुलपतिचरः अत्र केन चरट् ?
- भूतपूर्वे चरट् (५-३-५३)

२४३. अयमेषाम् अतिशयेन आढ्यः आढ्यतमः इत्यत्र केन तमप् ?
- अतिशायने तमबिष्ठनौ (५-३-५५)

२४४. घसंज्ञासूत्रं किम् ? - तरप्तमपौ घः (१-१-२२)

२४५. अयमनयोरतिशयेन लघुः लघुतरः अत्र केन तरप् ?
- द्विवचनविभज्योपपदे तरबीयसुनौ (५-३-५७)

२४६. श्रेष्ठः कः ? - अयमनयोरतिशयेन प्रशस्यः।

२४७. भूयान् कः ? - अयमनयोरतिशयेन बहुः।

२४८. कनीयान् कः ? - अयमनयोरतिशयेन युवा अल्पः वा।

२४९. बहुपटुः कः ? - ईषदूनः पटुः।

२५०. सर्वकः अत्र कः तद्धितः ? - अकच्।

२५१. नीतिः का ? - सामदानभेददण्डरूपा।

२५२. किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् (५-३-९२) अस्योदाहरणं किम् ?
- कतरः।

२५३. वा बहूनां जातिपरिप्रश्ने डतमच् (५-३-९३) किमुदाहरणम् ? - कतमः।

२५४. मुखमिव मुख्यः अत्र केन यः ? - शाखादिभ्यो यः (५-३-१०३)

२५६. काकतालीयः अत्र केन छः ? - समासाच्च तद्विषयात् (५-३-१०६)

२५७. प्राचीनम् अत्र केन खः ? - विभाषाञ्चेरदिक् स्त्रियाम् (५-४-८)

२५८. एकस्य सकृत् केन ? - एकस्य सकृच्च (५-४-१९)

२६०. अन्नमयम् अत्र केन मयट् ? - तत्प्रकृतवचने मयट् (५-४-२१)

२६१. पितृदेवत्यम् अत्र केन यत् ? - देवतान्तात्तादर्थ्ये यत् (५-४-२४)

२६२. नामधेयम् अत्र केन धेयः ? - भागरूपनामभ्यो धेयः (वा)

२६३. अतिथये इदम् आतिथ्यम् इति कथम् ? - अतिथेर्ञ्यः (५-४-२६)

२६४. देव एव देवता अत्र केन तल् ? - देवात्तल् (५-४-२७)

२६५. प्रज्ञः एव प्राज्ञः अत्र केनाण् ? - प्रज्ञादिभ्यश्च (५-४-३८)

२६६. बहूनि ददाति किं रूपम् ? - बहुशः।
२६७. कृष्णीक्रोति अत्र केन च्विः ? - कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः (५-४-५०)
२६८. किं नाम आभीक्ष्ण्यम् ? - पौनः पुन्यम्।
२६९. एकैकम् अत्र केन बहुव्रीहिवत् ? - एकं बहुव्रीहिवत् (८-१-९)
२७०. अन्योन्यम् अत्र केन सुः ?
- असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः(वा)।

## दशगणी

१. कति लकाराः ? - दश।
२. कः लकारः छन्दोमात्रगोचरः ? - लेट्।
३. लट्प्रत्ययविधायकं सूत्रं किम् ? - वर्तमाने लट् (३-२-१२३)
४. तिङ्प्रययाः कति ? - अष्टादश।
५. परस्मैपदसंज्ञासूत्रं किम् ? - लः परस्मैपदम् (१-४-९९)
६. आत्मनेपदसंज्ञासूत्रं किम् ? - तङानावात्मनेपदम् (१-४-१००)
७. किं कर्त्रभिप्रायम् ? - कर्तारम् अभिप्रैति गच्छति।
८. सार्वधातुकसंज्ञासूत्रं किम् ? - तिङ्शित्सार्वधातुकम् (३-४-११३)
९. लिड्विधायकं सूत्रं किम् ? - परोक्षे लिट् (३-२-११५)
१०. अभ्याससंज्ञासूत्रं किम् ? - पूर्वोऽभ्यासः (६-१-४)
११. लुड्विधायकं सूत्रं किम् ? - अनद्यतने लुट् (३-३-१५)
१२. आर्धाधातुकसंज्ञासूत्रं किम् ? - आर्धधातुकं शेषः (३-४-११४)
१३. लृड्विधायकं सूत्रं किम् ? - लृट् शेषे च (३-३-१३)
१४. लोड्विधायकं सूत्रं किम् ? - लोट् च (३-३-१६२)
१५. लोटो लङ्वत् (३-४-८५) कीदृशं सूत्रम् ? - अतिदेशः।
१६. लङ्विधायकं सूत्रं किम् ? - अनद्यतने लङ् (३-२-१११)
१७. विधिः कः? - प्रेरणम्।
१८. निमन्त्रणं किम् ? - नियोगकरणम्।
१९. आमन्त्रणं किम् ? - कामचारानुज्ञा।
२०. अधीष्टः कः ? - सत्कारपूर्वकः व्यापारः।
२१. सम्प्रश्नः कः ? - इदं कार्यं न वा इति विचार्य निर्धारणम्।

२२. प्रार्थनं नाम किम् ? - याच्ञा।

२३. लिङ्विविधायकं सूत्रं किम् ?

- विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् (३-३-१६१)

२४. लुङ्विधायकं सूत्रं किम् ? - लुङ् (३-२-११०)

२५. लुङि कः विकरणप्रत्ययः ? - च्लिः।

२६. लृङ् केन सूत्रेण ? - लिङ्निमित्ते लृङ् क्रियातिपत्तौ (३-३-१३९)

२७. संहिता क्व नित्या अनित्या च ? -

- संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ।।

२८. कृञ्चानुप्रयुज्यते लिटि (३-१-४०) अत्र कृञ् कः ? - प्रत्याहारः।

२९. यङ्लुकि कानि पञ्च न भवन्ति ? -श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि।।

३०. संघर्षः कः ? - पराभिभवेच्छा।

३१. लोडनं नाम किम् ? - प्रतिघातः।

३२. आप्रवणं नाम किम् ? - उत्प्लवनमुद्धरणञ्च।

३३. श्लाघा का? - अविद्यमानगुणज्ञापनम्।

३४. आसेचनं नाम किम् ? - अर्द्रीकरणम्।

३५. शास्त्रं नाम किम् ? - शासनम्।

३६. विलेखनं नाम किम् ? - भेदनम्।

३७. संघातः कः? - ग्रन्थः।

३८. उत्साहः कः विवक्षितः ? - वृद्धिः औद्धत्यञ्च।

३९. लौल्यं किं विवक्षितम् ? - गर्वः चापल्यञ्च।

४०. आक्षेपः कः ? - निन्दा।

४१. आयामः कः ? - दैर्घ्यम्।

४२. नीचैर्गतिः का ? - मन्दगमनम् असद्व्यवहारश्च।

४३. किं नाम भषणम् ? - श्वरवः।

४४. कल्कनं किं विवक्षितम् ? - दम्भः शाठ्यञ्च।

४५. उञ्छः कः ? कणशः आदानम्।

४६. विवासः कः ? - समाप्तिः।

४७. परिभाषणं किं विवक्षितम् ? - परिहासः सनिन्दोपालम्भश्च।

४८. मार्जनं नाम किम् ? - शुद्धिः न्यग्भावश्च।
४९. तोडनं नाम किम् ? - दारणं हिंसनञ्च।
५०. वरणं नाम किम् ? - स्वीकारः।
५१. किं नाम भावकरणम् ? - अभिप्रायसूचनम्।
५२. सनाद्यन्तानां धातुसंज्ञासूत्रं किम् ? - सनाद्यन्ता धातवः (३-१-३२)
५३. समवायः कः ? - सम्बन्धः सम्यगवबोधो वा।
५४. कान्तिः का विवक्षिता ? - इच्छा।
५५. पलायते अत्र केन लादेशः ? - उपसर्गस्यायतौ (८-२-१९)
५६. प्लायते अत्र कः धातुः ? - अय गतौ।
५७. उदयति इत्यत्र परस्मैपदं कथम् ? - इट किट कटी इत्यत्र प्रश्लिष्टस्य।
५८. आदानं नाम किम् ? - ग्रहणम्।
५९. सन्तानः कः ? - अवयवानां शिथिलीकरणं सुरायाः सन्धानं स्थानञ्च।
६०. अभिषवो नाम कः ? - प्रबन्धः।
६१. निष्कर्षः कः ? - निष्कोषणम्।
६२. विशब्दनं किम् ? - प्रतिज्ञानम्।
६३. उद्घाटनमिति वृद्धिः कथम् ? - घट संघाते इति चौरादिकस्य इदम्।
६४. किं स्खदनम् ? - विद्रावणम्।
६५. नाट्यं नाम किम् ? - वाक्यार्थाभिनयः।
६६. नृत्यं नाम किम् ? - पदार्थाभिनयः।
६७. नृत्तं नाम किम् ? - गात्रविक्षेपमात्रम्।
६८. आध्यानं नाम किम् ? - उत्कण्ठापूर्वकं स्मरणम्।
६९. निशानं नाम किम् ? - तीक्ष्णीकरणम्।
७०. उन्मथनं नाम किम् ? - क्षोभणम्।
७१. मित्संज्ञा केन विधीयते ? - घटादयो मितः (ग.सू.)
७२. प्रज्वालयति इति दीर्घः कथम् ? - घञन्तात् तत्करोति...इति णौ।
७३. अपप्तत् अत्र केन क आगमः ? - पतः पुम् (७-४-१९) - पुम्।
७४. संस्त्यानं नाम किम् ? - संघातः।
७५. पिबति अत्र क आदेशः ? - पिबादेशः।
७६. सीदति अत्र कः धातुः ? - षद्लृ विशरणगत्यवसादनेषु।
७७. उन्दनं नाम किम् ? - क्लेदनम्।

७८. निशामनं नाम किम् ? - ज्ञानम्।
७९. घुसंज्ञासूत्रं किम् ? - दाधा घ्वदाप् (१-१-२०)
८०. सृ गतौ धातोः क आदेशः ? किञ्च रूपम् ? - धौः। धावति।
८१. प्रसवः कः विवक्षितः ? - अभ्यनुज्ञानम्।
८२. अभिभवः कः ? - न्यूनीकरणं न्यूनीभवनञ्च।
८३. किं प्रणिदानम् ? - विनिमयः प्रत्यर्पणञ्च।
८४. सन्प्रत्ययविधायकसूत्रं किम् ? - गुप्तिज्किद्भ्यः सन् (३-१-५)
८५. तितिक्षते नाम किम् ? - क्षमते।
८६. गच्छति इत्यत्र केन छः ? - इषुगमियमां छः (७-३-७७)
८७. आक्रोशः कः ? - विरुद्धानुध्यानम्।
८८. बीजसन्तानं नाम किम् ? - क्षेत्रे विकिरणं गर्भाधानञ्च।
८९. अत्ति अत्र शपः लुक् केन ? - अदिप्रभृतिभ्यः शपः (२-४-७२)
९०. जहि अत्र कः धातुः ? - हन हिंसागत्योः।
९१. उपचयो नाम कः ? - वृद्धिः।
९२. शीङो रुट् (७-१-६) अस्य किमुदाहरणम् ? - शेरते।
९३. आह अत्र कः धातुः ? - ब्रूञ् व्यक्तायां वाचि।
९४. प्रजनं नाम किम् ? - गर्भग्रहणम्।
९५. गन्धनं नाम किम् ? - सूचनम्।
९६. सस्थानो नाम कः ? - जिह्वामूलीयः।
९७. वेद कोऽयं लकारः ? - लट्।
९८. यङ्लुगन्तस्य का संज्ञा पूर्वाचार्यसिद्धा ? - चर्करीतम्।
९९. शाधि अत्र कः धातुः ? - शासु अनुशिष्टौ।
१००. चकासति इदं किं वचनम् ? - बहुवचनम्।
१०१. जुहोत्यादिगणे शपः क आदेशः ? - श्लुः।
१०२. जन जनने धातुः लटि एकवचने किं भवति ? - जजन्ति।
१०३. दिवादिभ्यः कः विकरणप्रत्ययः ? - श्यन्।
१०४. ह्वरणं नाम किम् ? - कौटिल्यम्।
१०५. पूतीभावः कः? - दौर्गन्ध्यम्।
१०६. चक्यर्थः कः ? - तृप्तिः।
१०७. समाधिः कः ? - चित्तवृत्तिनिरोधः।

१०८. प्रीणनं नाम किम् ? - तृप्तिः तर्पणा च।
१०९. वैचित्त्यं नाम किम् ? - अविवेकः।
११०. गार्ध्यं नाम किम् ? - आकाङ्क्षा।
१११. परिणामः कः ? - विकारः।
११२. अभिषवः कः ? - स्नपनं पीडनं स्नानं सुरासन्धानञ्च।
११३. स्वादिभ्यः कः विकरणप्रत्ययः ? - श्नुः।
११४. तुदादिभ्यः कः विकरणप्रत्ययः ? - शः।
११५. अतिसर्जनं किम् ? - दानम्।
११६. लज्जते अत्र कः धातुः ? - ओ लस्जी व्रीडायाम्।
११७. उत्क्लेशः कः ? - पीडा।
११८. किं नाम विमोहनम् ? - आकुलीकरणम्।
११९. घनत्वं नाम किम् ? - सान्द्रता।
१२०. परिवेत्ता कः ? - ज्येष्ठं परित्यज्य दारानग्नींश्च यः लब्धवान्।
१२१. रुधादिभ्यः कः विकरणप्रत्ययः ? - श्नम्।
१२२. व्यक्तिः नाम का ? - विवचनम्।
१२३. म्रक्षणं नाम किम् ? - स्निग्धता।
१२४. तनादिभ्यः कः विकरणः ? - उः।
१२५. संस्करोति अत्र केन सुट् ? - सम्परिभ्यां करोतौ भूषणे (६-१-१३७)
१२६. क्र्यादिभ्य कः विकरणः ? - श्ना।
१२७. रेषणं नाम किम् ? - वृकशब्दः।
१२८. भूतप्रादुर्भावः कः ? - अतिक्रान्तोत्पत्तिः।
१२९. चुरादिभ्यः कः विकरणः ? - णिच्।
१३०. चोरयति/चोरयते इति उभयपदी कथम् ? - णिचश्च (१-३-७४)
१३१. अवस्पन्दनं नाम किम् ? - नाट्यम्।
१३२. शक्तिबन्धनं नाम किम् ? - प्रजननसामर्थ्यं शक्तिबन्धश्च।
१३३. चुरादिगणे केन णिचः वैकल्पिकत्वं विधीयते ? - आ धृषाद्वा (ग.सू.)
१३४. किं नाम उपधारणम् ? - अभ्यासः।
१३५. गालोडितं नाम किम् ? - वाचां विमर्शः।

## णिजादिप्रकरणम्

१. हेतुसंज्ञासूत्रं किम् ? - तत्प्रयोजको हेतुश्च (१-४-५५)
२. प्रेरणार्थे केन णिच् ? - हेतुमति च (३-१-२६)
३. भावयति इत्यस्य कः विग्रहः ? - भवन्तं प्रेरयति ।
४. पालयति इत्यत्र केन लुग् ? - पातेर्णौ लुग् वक्तव्यः (वा)
५. इण् धातुः णौ बोधने किं रूपं प्राप्नोति ? - प्रत्याययति ।
६. इच्छार्थे केन सन् ? - धातोः कर्मणः समानकर्तृकादिच्छायां वा (३-१-७)
७. पठितुम् इच्छति किं रूपम् ? - पिपठिषति ।
८. अत्तुम् इच्छति किं रूपम् ? - जिघत्सति ।
९. जेतुमिच्छति किं रूपम् ? - जिगीषति ।
१०. हन्तुमिच्छति किं रूपम्? - जिघांसति ।
११. आप्तुमिच्छति किं रूपम्? - ईप्सति ।
१२. श्वा मुमूर्षति अत्र केन सन् ? - आशङ्कायां सन्वक्तव्यः (वा) ।
१३. पिपठिषेति सन्नन्तात् सन् कुतो न ? -

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपप्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ।। (वा)

१४. यङ्विधायकं सूत्रं किम् ? - धातोरेकाचो हलादेः क्रियासमभिहारे यङ् (३-१-२२)
१५. क्रियासमभिहारः कः ? - पौनः पुन्यं भृशार्थश्च ।
१६. कुटिलं गच्छति जङ्गम्यते अत्र केन यङ् ? - नित्यं कौटिल्ये गतौ (३-१-२३)
१७. जञ्जप्यते अत्र कः विग्रहः ? - गर्हितं जपति ।
१८. पनीपत्यते अत्र कः आगमः ? - नीक् ।
१९. नरीनृत्यते अत्र केन रीक् ? - रीगृदुपधस्य च (७-४-९०)
२०. चेकीयते अत्र केन की ? - चायः की (६-१-२१)
२१. यङ्लुग्विधायकं सूत्रं किम् ? - यङोऽचि च (२-४-७४)
२२. चर्कर्ति, चरिकर्ति, चरीकर्ति अत्र के आगमाः ? - रुक्, रिक्, रीक् ।
२३. पुत्रमात्मनः इच्छति पुत्रीयति अत्र केन क्यच् ? - सुप आत्मनः क्यच् (३-१-८)
२४. लालसा नाम का ? - उत्कटेच्छा ।
२५. पुत्रकाम्यति अत्र केन काम्यच् ? - काम्यच्च (३-१-९)
२६. पुत्रमिवाचरति पुत्रीयति अत्र केन क्यच् ? - उपमानादाचारे (३-१-१०)

२७. कृष्ण इव आचरति कृष्णायते अत्र केन क्यङ्?- कर्तुः क्यङ् सलोपश्च (३-१-११)

२८. कृष्ण इवाचरति कृष्णति अत्र केन क्विप् ?

- सर्वप्रातिपदिकेभ्य: क्विब्वा वक्तव्य: (वा)

२९. राजा इव आचरति किं रूपम् ? - राजानति।

३०. भृशायते अत्र क: विग्रह: ? - अभृश: भृश: भवति।

३१. अलोहितो लोहितो भवति लोहितायति अत्र केन क्यष् ?

- लोहितादिडाज्भ्य: क्यष् (३-१-१३)

३२. कष्टायते अत्र क: विग्रह: ? - कष्टाय क्रमते।

३३. तप: चरति तपस्यति अत्र क: प्रत्यय: ? - क्यङ्।

३४. शब्दं करोति किं रूपम् ? - शब्दायते।

३५. सुखायते क: विग्रह: ? - सुखं वेदयते।

३६. नमस्यति अत्र केन क्यच् ? - नमोवरिवश्चित्रङ: क्यच् (३-१-१९)

३७. व्यसनं नाम किम् ? - विविधं विरुद्धं वा उत्क्षेपणम्।

३८. कण्डूयति इत्यत्र केन यक् ? - कण्ड्वादिभ्यो यक् (३-१-२७)

३९. बभूवे अत्र केन आत्मनेपदम् ? - भावकर्मणो: (१-३-१३)

४०. व्यतिहार: क: ? - क्रियाविनिमय:।

४१. निविशते अत्र केनात्मनेपदम् ? - नेर्विश: (१-३-१७)

४२. विजयते अत्र केन आत्मनेपदम् ? - विपराभ्यां जे: (१-३-१९)

४३. विपादिका का ? - पादस्फोट:।

४४. धनुषि शिक्षते अस्य कोऽर्थ: ? - धनुर्विषये ज्ञाने शक्तो भवितुमिच्छति।

४५. आपृच्छते अत्र केनात्मनेपदम् ? - आङि नुप्रच्छ्यो: (वा)

४६. संतिष्ठते अत्र केनात्मनेपदम् ? - समवप्रविभ्य: स्थ: (१-३-२२)

४७. शब्दं नित्यमातिष्ठते अत्र केन आत्मनेपदम् ?

- आङ: प्रतिज्ञायामुपसंख्यानम् (वा)

४८. गोपी कृष्णाय तिष्ठते अत्र केन आत्मनेपदम् ?

- प्रकाशनस्थेयाख्ययोश्च (१-३-२३)

४९. सङ्गच्छते अत्र केन आत्मनेपदम् ? - समो गम्यृच्छिभ्याम् (१-३-२९)

५०. नदी वहति इत्यादौ अकर्मकत्वं कथम्? - धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंगृहात्।
प्रसिद्धेरविवक्षात: कर्मणोऽकर्मिका क्रिया।।

५१. स्पर्धायामाङ:(१-३-३१) अस्य किमुदाहरणम् ?- कृष्ण: चाणूरम् आह्वयते।

५२. गन्धनं नाम किम् ? - हिंसा।

५३. अवक्षेपणं नाम किम् ? - भर्त्सनम्।

५४. शास्त्रे नयते नाम कोऽर्थः ? - शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयति।

५५. विगणनं नाम किम् ? - ऋणादेः निर्यातनम्।

५६. वृत्तिः का ? - अप्रतिबन्धः।

५७. उपक्रमते अत्र केन आत्मनेपदम् ? - उपपराभ्याम् (१-३-३९)

५८. उपमन्त्रणं नाम किम् ? - उपच्छन्दनम्।

५९. व्यक्तवाचः के ? - व्यक्ताः स्पष्टोच्चारिताः वाचः शब्दाः येषां ते।

६०. स्वकरणं नाम किम् ? - स्वीकारः।

६१. उपयमनं नाम किम् ? - विवाहः।

६२. जिज्ञासते अत्र केन आत्मनेपदम् ? - ज्ञाश्रुस्मृदृशां सनः (१-३-५७)

६३. बिभाषिषते अत्र केनात्मनेपदम् ? - पूर्ववत्सनः (१-३-६२)

६४. ओदनं भुङ्क्ते अत्र केनात्मनेपदम् ? - भुजोऽनवने (१-३-६६)

६५. विरमति अत्र केन परस्मैपदम् ? - व्याङ्परिभ्यो रमः (१-३-८३)

६६. कृष्णं गोपी शाययति अत्र केन परस्मैपदम् ?

- अणावकर्मकाच्चित्तवत्कर्तृकात् (१-३-८८)

६७. भूयते अत्र केन यक् ? - सार्वधातुके यक् (३-१-६७)

६८. अभावि इत्यत्र केन चिण् ? - चिण्भावकर्मणोः (३-१-६६)

६९. पच्यते तण्डुलः स्वयमेव अत्र केन कर्मवत् ?

- कर्मवत्कर्मणा तुल्यक्रियः (३-१-८७)

७०. अभिज्ञावचनं नाम किम् ? - स्मृतिबोधकम्।

७१. अहं जगद इति कथम् ? - चित्तविक्षेपादिना पारोक्ष्यम्।

७२. यजति स्म अत्र केन लट् ? - लट् स्मे (३-२-११८)

७३. पुरा छात्राः वसन्ति अत्र केन लट् ? - पुरि लुङ् चास्मे (३-२-१२२)

७४. अयमागच्छामि इत्यत्र केन लट् ?

- वर्तमानसामीप्ये वर्तमानवद्वा (३-३-१३१)

७५. कृष्णं नमेत् चेत् सुखं यायात् अत्र केन लिङ् ?

- हेतुहेतुमतोर्लिङ् (३-३-१५६)

७७. प्रैषः नाम कः ? - विधिः।

७८. अतिसर्गः नाम कः ? - कामचारानुज्ञा।

७९. त्वं कन्यां वहेः अत्र योग्यार्थे केन लिङ् ? - अर्हे कृत्यतृचश्च (३-३-१६९)

८०. त्वं भारं वहेः अत्र शक्यार्थे केन लिङ् ? - शकि लिङ् च (३-३-१७२)

८१. वसन् ददर्श अत्र केन भूते लट् ? - धातुसम्बन्धे प्रत्ययाः (३-४-१)

८२. याहि याहि इति याति अत्र केन द्वित्वम् ? - क्रियासमभिहारे द्वे वाच्ये (वा)

८३. सनादयः कति ? - द्वादश।

८४. सनादयः के ? -सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब्णिज्यङौ तथा।
यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः।।

## कृदन्तप्रकरणम्

१. कृत्प्रत्ययः कस्मात् भवति ? - धातोः।

२. वाऽसरूपोऽस्त्रियाम् (३-१-९४) कीदृशं सूत्रम् ? - परिभाषा।

३. कृत्यसंज्ञासूत्रं किम् ? - कृत्याः (३-१-९५)

४. एधनीयम् अत्र केन अनीयर् ? - तव्यतव्यानीयरः (३-१-९६)

५. वास्तव्यः इत्यत्र कस्मिन्नर्थे तव्यत् ? - कर्तरि।

६. भिदेलिमाः अत्र कः प्रत्ययः ? - केलमिर्।

७. चेयम् अत्र केन यत् ? - अचो यत् (३-१-९७)

८. शक्यम् अत्र केन यत् ? - शकिसहोश्च (३-१-९९)

९. अर्यः कः ? - स्वामी वैश्यः वा।

१०. ब्रह्महत्या इत्यत्र केन क्यप् ? - हनस्त च (३-१-१०८)

११. शिष्यः अत्र केन क्यप् ? - एतिस्तुशास्वृदृजुषः क्यप् (३-१-१०९)

१२. आज्यम् अत्र केन क्यप् ? - आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् (वा)

१३. सूर्यः कः ? - यः आकाशे सरति।

१४. अस्वैरी कः ? - परतन्त्रः।

१५. कार्यम् अत्र केन ण्यत् ? - ऋहलोर्ण्यत् (३-१-१२४)

१६. धाय्या अत्र कः विग्रहः ? - धीयते अनया समिदिति।

१७. कुण्डपाय्यः अत्र कः विग्रहः ? - कुण्डेन पीयते अस्मिन् सोमः।

१८. कारकः अत्र केन ण्वुल् ? - ण्वुल्तृचौ (३-१-१३३)

१९. जनमर्दयतीति जनार्दनः अत्र कः प्रत्ययः ? - ल्युः।

२०. मधुसूदनः कः ? - मधुं सूदयति।

२१. बुधः अत्र केन कः ? - इगुपधज्ञाप्रीकिरः कः (३-१-१३५)
२२. पिबतीति पिबः अत्र कः प्रत्ययः ? - शः।
२३. गोविन्दः अत्र केन शः ? - गवादिषु विन्देः संज्ञायाम् (वा)
२४. विभाषा ग्रहः (३-१-१४३) अत्र कीदृशी विभाषा ? - व्यवस्थितविभाषा।
२५. गृह्णाति धान्यादिकं गृहम् अत्र केन कः ? - गेहे कः (३-१-१४४)
२६. शिल्पं नाम किम् ? - क्रियाकौशलम्।
२७. नर्तकः अत्र केन ष्वुन् ? - शिल्पिनि ष्वुन् (३-१-१४५)
२८. गायतीति गायनः अत्र केन ल्युट् ? - ल्युट् च (३-१-१४७)
२९. जीवतात् जीवकः इत्यत्र केन वुन् ? - आशिषि च (३-१-१५०)
३०. कुम्भं करोति कुम्भकारः अत्र केनाण् ? - कर्मण्यण् (३-२-१)
३१. गां ददाति गोदः अत्र केन कः ? - आतोऽनुपसर्गे कः (३-२-३)
३२. द्वाभ्यां पिबति द्विपः अत्र केन कः ? - सुपि स्थः (३-२-४)
३३. प्रष्ठः कः ? यः अग्रतः गच्छति गवादिः।
३४. तुन्दं परिमार्ष्टि तुन्दपरिमृजः कः ? - अलसः।
३५. सूत्रग्रहः इत्यत्र केन अच् ? - सूत्रे च धार्येऽर्थे (वा)
३६. कर्णेजपः अत्र केन अच् ? - स्तम्बकर्णयोरमिजपोः (३-२-१३)
३७. शंकरः अत्र केनाच् ? - शमि धातोः संज्ञायाम् (३-२-१४)
३८. कुरुचरः अत्र केन टः ? - चरेष्टः (३-२-१६)
३९. आदायचरः कः ? - लब्धं द्रव्यं गृहीत्वा चरति।
४०. पुरःसरः अत्र केन टः ? - पुरोऽग्रतोऽग्रेषु सर्तेः (३-२-१८)
४१.यशस्करी विद्या अत्र केन टः?- कृञो हेतुताच्छील्यानुलोम्येषु (३-२-२०)
४२. आनुलोम्यं नाम किम् ? - आराध्यचित्तानुवर्तनम्।
४३. कर्मकरः अत्र केन टः ? - कर्मणि भृतौ (३-२-२२)
४४. एजेः खश् (३-२-२८) अस्य किमुदाहरणम् ? - जनमेजयः।
४५. जनमेजयः अत्र केन मुमागमः ? - अरुर्द्विषदजन्तस्य मुम् (६-३-६७)
४६. शर्धः कः ? - अपानद्वारे स्थितः शब्दः।
४७. स्तनं धयति स्तनन्धयः अत्र केन खश्? - नासिकास्तनयोर्ध्माधेटोः (३-२-२९)
४८. अभ्रंलिहः अत्र केन खश् ? - वहाभ्रे लिहः (३-२-३२)
४९. असूर्यम्पश्याः के ? - ये सूर्यं न पश्यन्ति राजदाराः ते।
५०. प्रियंवदः अत्र केन खच् ? - प्रियवशे वदः खच् (३-२-३८)

५१. वाचंयमः अत्र केन खच् ? - वाचि यमो व्रते (३-२-४०)
५२. पुरन्दरः इत्यत्र केन खच् ? - पूःसर्वयोर्दारिसहोः (३-२-४१)
५३. सर्वकूलाभ्रकरीषेषु कषः (३-२-४२) अस्यैकमुदाहरणम् - कूलङ्कषा नदी।
५४. भयङ्करः अत्र केन खच् ? - मेघर्तिभयेषु कृञः (३-२-४३)
५५. पन्नगः अत्र कः विग्रहः ? - पन्नं पतितं गच्छति यः।
५६. दुःखेन गच्छति अत्र किं रूपम् ? - दुर्गः।
५७. राजानं हन्ति कः ? - राजघः।
५८. समानः पश्यति कः ? - सदृशः।
५९. उपनिषत् अत्र कः प्रत्ययः ? - क्विप्।
६०. कामं दुग्धे कामदुघा अत्र केन कप् ? - दुहः कब्घश्च (३-२-७०)
६१. उष्णभोजी कः ? - उष्णभोजनशीलः।
६२. शीतभोजी अत्र केन णिनिः ? - सुप्यजातौ णिनिस्ताच्छील्ये (३-२-७८)
६३. पण्डितमानी कः ? - पण्डितमात्मानं मन्यते।
६४. पण्डितम्मन्यः अत्र केन खश् ? - आत्ममाने खश्च (३-२-८३)
६५. सोमेनेष्टवान् सोमयाजी अत्र केन णिनिः ? - करणे यजः (३-२-८५)
६६. वृत्रहा अत्र केन क्विप् ? - ब्रह्मभ्रूणवृत्रेषु क्विप् (३-२-८७)
६७. पारं दृष्टवान् पारदृश्वा अत्र कः प्रत्ययः ? - क्वनिप्।
६८. सरसिजम् अत्र केन डः ? - सप्तम्यां जनेर्डः (३-२-९७)
६९. उपसर्गे च संज्ञायाम् (३-२-९९) अस्य किमुदाहरणम् ? - प्रजा।
७०. निष्ठासंज्ञासूत्रं किम् ? - क्तक्तवतू निष्ठा (१-१-२६)
७१. स्नातम् अत्र केन क्तः ? - निष्ठा (३-२-१०२)
७२. पक्वः अत्र केन व आदेशः ? - पचो वः (८-२-५२) । वः ।
७३. वित्तमिति केन निपात्यते ? - वित्तो भोगप्रत्यययोः (४-२-५८)
७४. भित्तं किम् ? - शकलम्।
७५. किं नाम आदिकर्म ? - दीर्घकालव्यासक्तायाः कटाद्युत्पादनक्रियायाः आरम्भकालविशिष्टोऽशः।
७६. फाण्टं किम् ? - अनायाससाध्यः कषायविशेषः।
७७. दृढः इति कस्मिन्नर्थे निपात्यते ? - स्थूले बलवति च अर्थे।
७८. कष्टं शास्त्रमत्र केन इट् निषिध्यते ? - कृच्छ्रगहनयोः कषः (७-२-२२)
७९. विशब्दनं नाम किम् ? - शब्देन अभिप्रायप्रकाशनम्।

८०. हितम् अत्र कः धातुः ? - धा।

८१. दत्तः अत्र केन दत् ? - दो दद्घोः (७-४-४६)

८२. नद्यां स्नाति नदीष्णः अत्र केन षः ? - निनदीभ्यां स्नातेः कौशले (८-३-८९)

८३. गतः सः अत्र क्तः कस्मिन्नर्थे ? - कर्तरि।

८४. ध्रौव्यं नाम किम् ? - स्थैर्यम्।

८५. तस्थिवान् अत्र कः प्रत्ययः ? - क्वसुः।

८६. शुश्रुवान् इत्यत्र केन क्वसुः ? - भाषायां सदवसश्रुवः (३-२-१०८)

८७. अनूचानः कः ? - वेदस्य अनुवचनं कृतवान्।

८८. शतृप्रत्ययविधायकं सूत्रं किम् ?

- लटः शतृशानचावप्रथमासमानाधिकरणे (३-२-१२४)

८९. मुगागमविधायकसूत्रं किम् ? - आने मुक् (७-२-८२)

९०. विद्वान् इत्यत्र केन वसुः ? - विदेः शतुर्वसुः (७-१-३६)

९१. सत्संज्ञासूत्रं किम् ? - तौ सत् (३-२-१२७)

९२. यजमानः अत्र केन कः प्रत्ययः ?

- पूङ्यजोः शानन् (३-२-१२८)। शानन्।

९३. अधीयन् इत्यत्र केन शतृप्रत्ययः?- इङ्धार्योः शत्रकृच्छ्रिणि (३-२-१३०)

९४. कर्ता कटम् अत्र कः प्रत्ययः ? - तृन्।

९५. अलंकरिष्णुः अत्र कः प्रत्ययः ? - इष्णुच्।

९६. जिष्णुः अत्र केन ग्स्नुः ? - ग्लाजिस्थश्च ग्स्नुः (३-२-१३९)

९७. वराकः अत्र कः प्रत्ययः ? - षाकन्।

९८. दयालुः अत्र कः प्रत्ययः ? - आलुच्।

९९. भिदुरम् अत्र केन कुरच् ? - विदिभिदिच्छिदेः कुरच् (३-२-१६२)

१००. सृत्वरः अत्र कः प्रत्ययः ? - क्वरप्।

१०१. जागरूकः इत्यत्र केन ऊकः ? - जागुरूकः (३-२-१६५)

१०२. चिकीर्षुः अत्र केन उः ? - सनाशंसभिक्ष उः (३-२-१६८)

१०३. स्थावरः अत्र केन वरच् ? - स्थेशभासपिसकसो वरच् (३-२-१७५)

१०४. प्रभुः अत्र कः प्रत्ययः ? - डुः।

१०५. नेत्रम् इत्यत्र कः प्रत्ययः ? - ष्ट्रन्।

१०६. चरित्रम् अत्र कः प्रत्ययः ? - इत्रः।

१०७. पवित्रं नाम किम् ? - येन आज्यमुत्पूयते, यच्च अनामिकवेष्टनम्।

१०८. ऋषिः कः ? - वेदमन्त्रः।
१०९. बिभेति अस्मादिति कः ? - भीमः।
११०. द्रष्टुं याति अत्र केन तुमुन्? - तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम् (३-३-१०)
१११. स्पृशतीति स्पर्शः अत्र कः प्रत्ययः ? - घञ्।
११२. भावः कः ? - सिद्धावस्थापन्नः धात्वर्थः।
११३. कर्तृभिन्ने कारकेऽर्थे केन घञ् विधीयते ?
- अकर्तरि च कारके संज्ञायाम् (३-३-१९)
११४. स्यदः कः ? - वेगः।
११५. दाराः के ? - दारयन्ति चित्तं विद्रावयन्ति इति।
११६. जारः कः ? - जरयति कुलं नाशयति इति।
११७. उपाध्यायः कः ? - समीपं प्राप्य यस्मादधीयते सः।
११८. संयूयते मिश्रीक्रियते गुडादिभिः इति किं रूपम् ? - संयावः।
११९. अभ्रेषः नाम कः ? - यथाप्राप्तकरणम्।
१२०. उपसमाधानं नाम किम् ? - राशीकरणम्।
१२१. कायः कः ? - चीयते अस्मिन् अस्थ्यादिकम् इति।
१२२. अभिविधिः कः ? - कात्स्न्र्येन सम्बन्धः।
१२३. जयः अत्र केन अच् ? - एरच् (३-३-५६)
१२४. निश्चयः अत्र केन अप् ? - ग्रहवृदृनिश्चिगमश्च (३-३-५८)
१२५. विघ्नः अत्र केन कः ? - घञर्थे कविधानम् (वा)इति कः।
१२६. नियमः अत्र केन अप् ? - यमः समुपनिविषु च (३-३-६३)
१२७. समजः कः ? - पशूनां संघः।
१२८. यज्ञः अत्र कः प्रत्ययः ? - नङ्।
१२९. उपाधिः अत्र केन किः ? - उपसर्गे घोः किः (३-३-९२)
१३०. जलानि धीयन्तेऽत्र जलधिः अत्र केन किः ? - कर्मण्यधिकरणे च (३-३-९३)
१३१. स्तुतिः अत्र केन क्तिन् ? - स्त्रियां क्तिन् (३-३-९४)
१३२. श्रूयतेऽनया श्रुतिः अत्र केन क्तिन् ? - श्रुयजीषिस्तुभ्यः करणे (वा)
१३३. विदन्ति अनया विद्या अत्र कः प्रत्ययः ? - क्यप्।
१३४. क्रिया इत्यत्र केन शः ? - कृञः श च (३-३-१००)
१३५. चिकीर्षा अत्र केन अः ? - अ प्रत्ययात् (३-३-१०२)
१३६. शिक्षा अत्र केन अः ? - गुरोश्च हलः (३-३-१०३)

१३७. पचतिः अत्र केन श्तिप् ? - इक्श्तिपौ धातुनिर्देशे (वा)

१३८. अकारः अत्र केन कारः ? - वर्णात्कारः (वा)

१३९. रेफः अत्र केन कः प्रत्ययः ? - रादिफः (वा) । इफः ।

१४०. आकुर्वन्ति अस्मिन् आकरः अत्र कः प्रत्ययः ? - घः ।

१४१. अधीयते अस्मिन् इति किं रूपम् ? - अध्यायः ।

१४२. दुःशासनः अत्र कः प्रत्ययः ? - युच् ।

१४३. भुक्त्वा व्रजति अत्र केन क्त्वा ? - समानकर्तृकयोः पूर्वकाले (३-४-२१)

१४४. प्रकृत्य अत्र केन ल्यप् ? - समासेऽनञ्पूर्वे क्त्वो ल्यप् (७-१-३७)

१४५. विरचय्य अत्र केन अयादेशः ? - ल्यपि लघुपूर्वात् (६-४-५६)

१४६. स्मारं स्मारम् अत्र केन णमुल् ? - आभीक्ष्ण्ये णमुल् च (३-४-२२)

१४७. यावति विन्दजीवोः (३-४-३०) अस्य किमुदाहरणम् ?

- यावज्जीवमधीते ।

१४८. अयथाभिप्रेताख्यानं नाम किम् ? - अप्रियस्य उच्चैः, प्रियस्य नीचैः कथनम्।

१४९. आनुलोम्यं नाम किम् ? - आनुकूल्यम्।

१५०. स्वादुंकारं भुङ्क्ते अस्य कः विग्रहः ? - अस्वाद्वीं स्वाद्वीं कृत्वा भुक्ते।



# परमलघुमञ्जूषा

## वृत्तिनिरूपणम्

१. परमलघुमञ्जूषायाः कर्ता कः ? - नागेशभट्टः।
२. अस्य ग्रन्थस्य किरणावलीव्याख्याकर्ता कः ? - लोकमणिदाहालः।
३. कति स्फोटाः ? - अष्टौ।
४. कः स्फोटः मुख्यः ? - वाक्यस्फोटः।
५. लोके अर्थबोधकत्वम् अर्थसमाप्तिश्च केन जायते ? - वाक्यस्फोटेन।
६. पदसमूहो वाक्यमर्थसमाप्तौ इति कस्य वचनम् ?
- न्यायभाष्यकारस्य वात्स्यायनस्य।
७. वर्णस्फोटः कः ? - शास्त्रप्रक्रियानिर्वाहकः।
८. आदेशता कस्य भवति ? - स्थान्यर्थाभिधानसमर्थस्य।
९. गौतमसूत्रे कति प्रमाणानि उक्तानि ? - चत्वारि।
१०. तानि कानि ? - प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः।
११. कः शब्दः प्रमाणम् ? - आप्तोपदेशरूपः।
१२. आप्तो नाम कः ? - अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान्।
१३. चरके पतञ्जलिना आप्तः कः उक्तः ? - रागादिवशादपि नान्यथावादी।
१४. शाब्दबोधः कस्य न भवति ? - अगृहीतवृत्तिकस्य।
१५. गुडः इत्युक्ते प्रकारतया किं न भासते ? - मधुरत्वम्।
१६. गुडपदश्रवणेन कः बोधः जायते ? - गुडत्वावच्छिन्नो गुडपदवाच्यः।
१७. वृत्तिज्ञानं कुत्र हेतुः ? - शाब्दबोधे।
१८. कति वृत्तयः ? - शक्तिः, लक्षणा, व्यञ्जना इति त्रिविधाः।
१९. नैयायिकमते शक्तिपदार्थः कः ? - ईश्वरेच्छा।
२०. ईश्वरेच्छा शक्तिः कुतो न ? - इच्छायाः सम्बन्धत्वासम्भवात्।
२१. सम्बन्धो नाम कः ? - सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः।
२२. वैयाकरणमते शक्तिः नाम का ? - पदपदार्थयोः वाच्यवाचकभावः सम्बन्धः।
२३. शक्तिग्राहकं किम् ? - इतरेतराध्यासमूलकं तादात्म्यम्।
२४. शक्तेः कार्यजनकत्वे कः नियामकः ? - सम्बन्धः।
२५. तादात्म्यं नाम किम् ? - तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्।

२६. शब्दार्थयोः तादात्म्यस्वीकारे कः दोषः नैयायिकैरुक्तः ? - अग्निशब्दोच्चारणे मुखे दाहापत्तिः।

२७. वस्तुतः कः अर्थः शक्यः ? - बौद्धः।

२८. किं पदं प्रसिद्धम् ? - स्फोटात्मकम्।

२९. वन्ध्यासुतः इत्यादौ कथं शाब्दबोधः ? - बौद्धार्थमादाय।

३०. वाच्यवाचकभावरूपा शक्तिः कुत्र अस्ति ? - साधुष्विव अपभ्रंशेषु अपि।

३१. असाधुशब्देन साधुस्मरणद्वाराऽर्थबोधः इति के आहुः ? - नैयायिकाः।

३२. शब्दैरपशब्दैश्च अर्थावगतौ समानायां शास्त्रेण किं क्रियते ? - धर्मनियमः।

३३. आर्यम्लेच्छाधिकरणं कुतः सङ्गच्छते ? - अपभ्रंशानां वाचकत्वादेव।

३४. साधुत्वं नाम किम् ? - व्याकरणान्वाख्येयत्वम्।

३५. शक्तिभेदाः के ? - रूढिः, योगः, योगरूढिः।

३६. रूढिः का ? - केवलसमुदायार्थनिरूपितशक्तिः।

३७. योगशक्तिः का ? - शास्त्रकल्पितावयवार्थनिरूपिता शक्तिः।

३८. योगरूढिः का ? - शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिः।

३९. मणिनूपुरादौ का शक्तिः ? - रूढिः।

४०. पाचकादौ का शक्तिः ? - योगः।

४१. पङ्कजादौ का शक्तिः ? - योगरूढिः।

४२. नानार्थेषु शक्तिः कैः नियम्यते ? - संयोगादिभिः।

४३. शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः के ? - संयोगादयः।

४४. शब्दार्थस्यानवच्छेदे अत्र अनवच्छेदपदार्थः कः ? - तात्पर्यसन्देहः।

४५. तार्किकमते लक्षणापदार्थः कः ? - स्वशक्यसम्बन्धः।

४६. लक्षणाभेदाः के ? - गौणी शुद्धा च।

४७. प्रकारान्तरेण लक्षणाभेदाः के ? - अजहत्स्वार्था जहत्स्वार्था च।

४८. अजहत्स्वार्था नाम का ? - स्वार्थसंवलितपरार्थाभिधायिनी।

४९. जहत्स्वार्था नाम का ? - स्वार्थपरित्यागेन इतरार्थाभिधायिनी।

५०. तात्स्थ्यादिनिमित्तिका का ? - लक्षणा।

५१. लक्षणावीजं किम् ? - तात्पर्यानुपपत्तिप्रतिसन्धानम्।

५२. लक्षणाभावे किं भाष्यं प्रदर्शितम् ? - सर्वे सर्वार्थवाचकाः।

५४. जघन्यवृत्तिः का ? - लक्षणा।

५५. सिद्धान्ते शक्तिः कतिधा ? - द्विविधा। प्रसिद्धाऽप्रसिद्धा इति।

५६. प्रसिद्धा शक्तिः का ? - आमन्दबुद्धिवेद्या।

५७. अप्रसिद्धा शक्तिः का ? - सहृदयहृदयमात्रवेद्या।

५८. तात्पर्यं नाम किम् ? - ऐश्वरं देवतामहर्षिवृद्धपरम्परातोऽस्मदादिभिः लब्धम्।

५९. व्यञ्जनापदार्थः कः ? - वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषः।

६०. द्योतकत्वं नाम किम् ? - स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वम्।

६१. वृत्त्याश्रयः शब्दः कः ? - स्फोटः।

६२. चतुर्विधा वाक् का ? - परा, पश्यन्ती, मध्यमा, वैखरी।

६३. वाङ्मूलचक्रस्था वाक् का ? - परा।

६४. पश्यन्ती का? - नाभिसंस्थिता।

६५. हृदिस्था वाक् का ? - मध्यमा।

६६. वैखरी का ? - कण्ठदेशगा।

६७. स्फोटव्यञ्जकः कः ? - मध्यमानादः।

६८. स्फुट्यतेऽभिव्यज्यते वर्णैः इति स्फोटः कः ? - अर्थः।

६९. स्फुटति अर्थः अस्मात् इति स्फोटः कः ? - शब्दः।

७०. मध्यमानादव्यङ्ग्यः शब्दः कः ? - स्फोटः।

७१. व्यञ्जकध्वनिगतं कत्वादिकं कुत्र भासते ? - स्फोटे।

७२. ध्वनिभेदाः के ? - प्राकृतः, वैकृतः।

७३. प्राकृतः ध्वनिः नाम कः ? - प्रकृत्याऽर्थबोधनेच्छया जातः।

७४. वैकृतः ध्वनिः नाम कः ? - प्राकृतात् जातः।

७५. स्फोटस्य ग्रहणे हेतुः ध्वनिः कः ? - प्राकृतः।

७६. अभ्यासार्थे का वृत्तिः ? - द्रुता।

७७. चिन्तने का वृत्तिः ? - मध्या।

७८. विलम्बिता वृत्तिः का ? - शिष्याणामुपदेशार्था।

७९. वस्तुतः कः वृत्त्याश्रयः ? - वाक्यस्फोटः वाक्यजातिस्फोटः वा।

८०. शाब्दबोधसहकारिकारणानि कानि ?
- आकाङ्क्षा, योग्यता, आसत्तिः, तात्पर्यम्।

८१. आकाङ्क्षा नाम का ? - वाक्यसमयग्राहिका।

८२. योग्यता नाम का ? - परस्परान्वयप्रयोजकधर्मवत्त्वम्।

८३. अयोग्यवाक्यस्य किमुदाहरणम् ? - अग्निना सिञ्चति।

८४. आसत्तिः नाम का ? - पदाव्यवधानम्।

८५. तात्पर्यं नाम किम् ? - एतत्पदं वाक्यं वा एतदर्थबोधायोच्चारणीयमिति ईश्वरेच्छा।
८६. आकाङ्क्षायाः किमुदाहरणम् ? - घटमानय।
८७. योग्यतायाः किमुदाहरणम् ? - पयसा सिञ्चति।
८८. आसत्तेः किम् उदाहरणम् ? - गिरिः अग्निमान्।
८९. अनासत्तेः किमुदाहरणम् ? - गिरिः भुक्तमग्निमान् देवदत्तेन।
९०. तात्पर्यस्य किमुदाहरणम् ? - सैन्धवमानय (युद्धे अश्वः, भोजने लवणः)

## धात्वर्थनिरूपणम्

१. सकलशब्दमूलभूतः कः ? - धातुः।
२. धात्वर्थः कः ? - फलं व्यापारश्च।
३. किं नाम फलत्वम् ? - तद्धात्वर्थव्यापारजन्यत्वे सति तद्धातुवाच्यत्वम्।
४. किं नाम व्यापारत्वम् ? - धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम्।
५. किं नाम अनुकूलत्वम् ? - फलनिष्ठजन्यतानिरूपितजनकत्वम्।
६. यास्केन किम्प्रधानमाख्यातमुक्तम् ? - भावप्रधानम् आख्यातम्।
७. फलव्यापारयोः पृथक्शक्तिवादिनः के ? - भट्टोजीदीक्षितादयः।
८. फलव्यापारयोः अखण्डशक्तिवादिनः के ? - नागेशभट्टादयः।
९. फलं धात्वर्थः, व्यापारः प्रत्ययार्थः इति के वदन्ति ? - मीमांसकाः।
१०. कर्त्रादिः तिङर्थत्वे किं सूत्रं मानम्?-लः कर्मणि च भावे चाकर्मकेभ्यः (३-४-६९)
११. किं नाम सकर्मकत्वम् ? - स्वार्थव्यापारव्यधिकरणफलवाचकत्वम्।
१२. किं नाम अकर्मकत्वम् ? - स्वार्थव्यापारसमानाधिकरणफलवाचकत्वम्।
१३. मीमांसकमते सकर्मत्वं नाम किम् ?
- प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वम्।
१४. क्रिया नाम का ? - सर्वकारकान्वयितावच्छेदकधर्मवती।
१५. क्रियाभेदाः के ? - साध्यक्रिया, सिद्धक्रिया।
१६. सिद्धत्वं नाम किम् ? - क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकरूपवत्त्वम्।
१७. साध्यत्वं नाम किम् ? - क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम्।
१८. सिद्धस्य किमुदाहरणम् ? - पाकः इत्यादि।
१९. साध्यस्य किमुदाहरणम् ? - पचति इत्यादि।
२०. वस्तुतः साध्यत्वं नाम किम् ? - निष्पाद्यत्वम्।

२१. केषामर्थः सत्ता ? - अस्तिभवतिवर्ततिविद्यतीनाम्।

२२. वस्तुतः सकर्मकत्वं नाम किम् ? - शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वम्।

२३. आत्माऽऽमानं जानाति अत्र कर्ता कः, कर्म किम् ?

- अन्तःकरणावच्छिन्नः कर्ता, शरीरावच्छिन्नं कर्म।

२४. क्रियत इति कर्मव्युत्पत्त्या क्रिया का ? - फलम्।

२५. क्रियतेऽनया इति करणव्युत्पत्त्या क्रिया का ? - व्यापारः।

२६. कर्तृस्थभावकः कः ? - यत्र कर्तृकर्मसाधारणरूपं फलं शब्देन प्रतिपाद्यते सः।

२७. कर्मस्थभावकः कः ? - यः कर्त्रवृत्तिकर्मस्थफलं सः।

२८. इच्छतेः कोऽर्थः ? - इच्छानुकूलं ज्ञानम्।

२९. पत् धातुः कदा अकर्मकः ? - विभागजन्यसंयोगमात्रपरत्वे।

३०. पत् धातुः कदा सकर्मकः ? - विभागजन्यसंयोगानुकूलव्यापारपरत्वे।

३१. कृञः कोऽर्थः ? - उत्पत्तिव्यधिकरणानुकूलव्यापारः।

३२. तार्किकमते कः धात्वर्थः ? - फलव्यापारौ।

३३. तार्किकमते लकाराणां कुत्र शक्तिः ? - कृतौ।

३४. तार्किकमते आख्यातार्थः कः ? - कृतिः।

३५. नैयायिकमते किं लाघवम् ? - कृतौ शक्तिस्वीकारे।

३६. एतन्मते कः मुख्यबोधः ? - प्रथमान्तार्थः।

३७. कृतिः का ? - चेतननिष्ठधर्मः।

३८. प्रथमान्तार्थमुख्यविशेष्यकबोधे किं न सिध्यति ?

- पश्य मृगो धावति इति भाष्यसिद्धैकवाक्यता।

३९. पचति भवति अत्र कः बोधः ? - पचिक्रियाकर्तृका सत्ता।

४०. अभिधानं प्रायेण कैः ? - तिङ्कृत्तद्धितसमासैः।

४१. परिगणनस्य प्रत्याख्यानात् किं सिध्यति ? - भीष्मं कटं कुरु इत्यादि।

## निपातार्थनिर्णयः

१. अनुभूयते सुखम् इत्यादौ कर्मणि लकारः कथम् ? - निपातानां द्योतकत्वात्।

२. प्रादेशं विलिखति अत्र विः किमाक्षेपकः ? - मानक्रियाक्षेपकः।

३. अथ शब्दानुशासनम् अत्राथशब्दः किमाक्षेपकः ? - प्रारम्भक्रियाक्षेपकः।

४. निपातविषये तार्किकाणां किं मतम् ?

- उपसर्गाः द्योतकाः, इतरनिपाताः वाचकाः।

५. घटं पटं पश्य अत्र कः बोधः ? - घटसमुच्चयवन्तं पटं पश्य।
६. निपातानाम् अर्थवत्त्वं कथम् ? - द्योत्यार्थमादाय।
७. साधनं नाम किम् ? - कारकम्।
८. पूर्वं धातुः केन युज्यते ? - साधनेन।
९. चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशे का लक्षणा ? - अप्रसिद्धा शक्तिरेव।
१०. तात्पर्यग्राहकत्वं नाम किम्?- स्वसमभिव्याहृतपदस्यार्थान्तरशक्तिद्योतकत्वम्।
११. नञः प्रकाराः के ? - पर्युदासः प्रसज्यप्रतिषेधः च।
१२. अब्राह्मणः इत्यत्र कथं बोधः ? - आरोपितब्राह्मणत्ववान् क्षत्रियादिः।
१३. पर्युदासः नाम कः ? - यत्र उत्तरपदेन साकं नञः अन्वयः सः।
१४. प्रतिषेधः कः ? - क्रियया सह यत्र नञः अन्वयः।
१५. नञर्थाः कति प्रकीर्तिताः वाक्यपदीये ? - षट्।
१६. नञर्थाः के ? - तत्सादृश्यम्, अभावः, तदन्यत्वम्, तदल्पता, अप्राशस्त्यम्, विरोधः।
१७. प्रसज्यप्रतिषेधस्य भेदाः के ? - समस्तः, असमस्तः।
१८. समस्तस्य कोऽर्थः ? - अत्यन्ताभावः।
१९. असमस्तस्य कोऽर्थः ? - अत्यन्ताभावः, अन्योन्याभावः।
२०. अत्यन्ताभावः कः ? - तादात्म्येतरसम्बन्धाभावः।
२१. अन्योन्याभावः कः ? - तादात्म्यसम्बन्धाभावः।
२२. एवशब्दार्थाः के ? - अवधारणम्, असम्भवः।
२३. अवधारणभेदाः के ? - अन्ययोगव्यवच्छेदः, अयोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदः।
२४. अयोगः नाम कः ? - सम्बन्धाभावः।
२५. व्यवच्छेदः नाम कः ? - निवृत्तिः।
२६. तन्त्रवार्तिके परिसंख्या का उक्ता ? -विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥

## लकारार्थनिर्णयः

१. लकार एव आख्यातार्थवाचकः केषां मते ? - नैयायिकानाम्।

२. लादेशतिबादयः आख्यातार्थवाचकाः केषां मते ? - वैयाकरणानाम्।
३. लादेशमात्रस्य केऽर्थाः ? - संख्याकालकारकाणि।
४. संख्या कस्य विशेषणम् ? - कारकस्य।
५. कालः कस्य विशेषणम् ? - व्यापारस्य।
६. किं नाम वर्तमानत्वम् ? - प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम्।
७. लिट्तिङः कोऽर्थः ? - भूतानद्यतनकालः परोक्षत्वञ्च।
८. किं नाम परोक्षत्वम् ? - साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम्।
९. लुडादेशस्य कोऽर्थः ? - भविष्यदनद्यतनम्।
१०. किं नाम भविष्यत्त्वम् ? - वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वम्।
११. लृट्तिङः कोऽर्थः ? - भविष्यत्सामान्यम्।
१२. लेट्तिङः कोऽर्थः ? - विध्यादिः।
१३. लोट्तिङः कोऽर्थः ? - विध्यादिः।
१४. लङादेशस्य कोऽर्थः ? - भूतानद्यतनम्।
१६. किं नाम प्रवर्तनात्वम् ? - प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्।
१७ऽ लुङादेशस्य कोऽर्थः ? - भूतसामान्यम्।
१८. किं नाम भूतत्वम् ? - वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वम्।
१९. लृङादेशस्य कोऽर्थः ? - क्रियातिपत्तौ गम्यमानायां हेतुहेतुमद्भावे च गम्यमाने भूतत्वं भविष्यत्वञ्च।
२०. नैयायिकमते आख्यातार्थः कः ? - कृतिः।
२१. व्यापारमुख्यविशेष्यकबोधः केषां मते ? - वैयाकरणानाम्।
२२. प्रथमान्तार्थमुख्यविशेष्यकबोधः केषां मते ? नैयायिकानाम्।
२३. कार्यं विधिः इति के वदन्ति ? - प्राभाकराः।
२४. स्वर्गकामो यजेत इत्यादौ प्राथमिकबोधः कः ? - स्वर्गकामनियोज्यकं यागविषयकं कार्यम्।
२५. द्वितीयः बोधः कः ? - सनियोज्यकं यागविषयकं स्थायिस्वर्गसाधनं कार्यम्।
२६. तृतीयः बोध कः ? - स्वर्गकामनियोज्यकः यागः स्वर्गकामकार्यः।
२७. चतुर्थः बोधः कः ? - स्वर्गकामः यागकर्ता।
२८. पञ्चमः बोध कः ? - अहं स्वर्गकामः। अतः यागः मत्कृतिसाध्यः।
२९. नियोज्यत्वं नाम किम् ? - क्रियानिष्ठकाम्यसाधनताज्ञानाधीनं मत्कार्यमिति बोधवत्त्वम्।

३०. प्रवर्तकज्ञानविषय: विधि: इति के वदन्ति ? - नैयायिका: ।
३१. कृतिसाध्यत्वं नाम किम् ? - प्रवृत्तिसाध्यत्वम्।
३२. अतिपत्ति: नाम का ? - अनिष्पत्ति: आपादनरूपा ।

## कारकनिरूपणम्

१. कारकत्वं नाम किम् ? - क्रियानिष्पादकत्वम्।
२. किं नाम कर्तृत्वम् ? - प्रकृतधातुवाच्यव्यापाराश्रयत्वम्।
३. तिङ्समानाधिकरणे का विभक्ति: ? प्रथमा ।
४. अभिहिते का विभक्ति: ? - प्रथमा ।
५. सूत्रमते प्रथमाया: कोऽर्थ: ? - प्रातिपदिकार्थ: ।
६. नागेशमते प्रथमाया: कोऽर्थ: ? - कारकत्वम्।
७. किं नाम कर्मत्वम् ? - प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थ-फलाश्रयत्वेन उद्देश्यत्वयोग्यताविशेषशालित्वम्।
८. प्रयागात्काशीं गच्छति अत्र प्रयागस्य कुतो न कर्मत्वम् ?
- विभागः न प्रकृतधात्वर्थ:।
९. काशीं गच्छन् पथि मृत: अत्र कथं कर्मत्वम् ? - फलाश्रयत्वेन उद्देश्यत्वसत्त्वात्।
१०. चैत्र: काशीं गच्छति न प्रयागम् अत्र प्रयागस्य कथं कर्मत्वम् ?
- उद्देश्यत्वयोग्यताविशेषसत्त्वात्।
११. द्वेष्योदासीनसंग्रहार्थं किं कर्मलक्षणम् ? - प्रकृतधात्वर्थप्रधानीभूतव्यापार-प्रयोजनप्रकृतधात्वर्थफलाश्रयत्वमनीप्सितकर्मत्वम्।
१२. अविवक्षितकर्मसंग्रहार्थं किं लक्षणम् ?
- अपादानादिविशेषाविवक्षितम् अकथितकर्मत्वम्।
१३. नैयायिकमते किं नाम कर्मत्वम् ? - धात्वर्थतावच्छेदकफलशालित्वम्।
१४. किं नाम करणत्वम् ? - स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वम्।
१५. बाणेन हत: अत्र कीदृशं कारकम् ? - करणम्
१६. किं नाम सम्प्रदानत्वम् ?
- क्रियामात्रसम्बन्धाय क्रियायामुद्देश्यं यत्कारकं तत्त्वम्।
१७. सम्यक् प्रदीयते यस्मै तत्सम्प्रदानम् इति अन्वर्थसंज्ञां के वदन्ति ?
- वृत्तिकारा: ।

१८. रजकाय वस्त्रं ददाति इति केषां मते न भवति ? - वृत्तिकाराणाम्।
१९. सम्प्रदानस्य लक्षणान्तरं किम् ? अकर्मकक्रियोद्देश्यत्वम्।
२०. किं नामापादानत्वम् ?
- तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वम्।
२१. वृक्षात्पर्णं पतति अत्र पर्णस्य कुतो न अपादानत्वम् ?
- परया कर्तृसंज्ञया बाधात्।
२२. वृक्षात्पर्णं पतति अत्र क: बोध: ? - वृक्षावधिकं पर्णकर्तृकं पतनम्।
२३. परस्परस्मान्मेषावपसरत: अत्र क: बोध: ?
- परस्परमेषावधिकं द्वित्वावच्छिन्नमेषकर्तृकमपसरणम्।
२४. किं नाम अधिकरणत्वम् ? - कर्तृकर्मद्वारकफलव्यापाराधारत्वम्।
२५. सत्सप्तम्या: कोऽर्थ: ? - क्रियान्तरज्ञापकत्वम्।
२६. गोषु दुह्यमानासु गत: अत्र क: बोध: ?
- गोनिष्ठदोहनक्रियाज्ञापितगमनाश्रय: चैत्र:।
२७. भेदक: क: ? - सम्बधनिरूपक:।
२८. भेद्य: क: ? - निरूपितसम्बन्धाश्रय: ।

## नामार्थविचार:

१. शब्दानां जातौ शक्ति: इति के वदन्ति ? - मीमांसका:।
२. व्यक्तीनां शक्तौ गौरवं के वदन्ति ? - मीमांसका:।
३. शक्तिग्राहकशिरोमणिव्यवहार: क्व शक्तिं ग्राहयति ? - व्यक्तौ।
४. वागित्यादौ स्त्रीत्वबोधनात् नामार्थ: क: मन्यते ? - लिङ्गम्।
५. किं नाम पुंस्त्वम् ? - अयमिति व्यवहारविषयत्वम्।
६. किं नाम स्त्रीत्वम् ? - इयमिति व्यवहारविषयत्वम्।
७. किं नाम क्लीबत्वम् ? - इदमिति व्यवहारविषयत्वम्।
८. दधि पश्य इत्यादौ कर्मादिभानात् क: प्रातिपदिकार्थ: मन्यते ? - कारकम्।
९. पञ्च प्रातिपदिकार्था: के ? - जातिव्यक्तिलिङ्गसंख्याकारकाणि।
१०. किं नाम अनुकरणत्वम्? - स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वम्।
११. किं नाम अनुकार्यत्वम् ? - स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वम्।
१२. अपदं न प्रयुञ्जीत इत्यत्र अपदं नाम किम् ? - अपरिनिष्ठितम्।

१३. परिनिष्ठितत्वं नाम किम् ? - अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्।

१४. अनुकार्यानुकरणयोरभेदपक्षे किं ज्ञापकम् ? - भू सत्तायामित्यादिनिर्देशः।

१५. अनुकार्यानुकरणयोर्भेदपक्षे किं ज्ञापकम्?
- भुवो वुग् लुङ्लिटोरित्यादिनिर्देशः।

## समासादिवृत्त्यर्थः

१. समासवृत्तिभेदाः के ? - जहत्स्वार्था, अजहत्स्वार्था।

२. किं नाम जहत्स्वार्थात्वम् ? - अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वम्।

३. किं नामाजहत्स्वार्थात्वम् ? - अवयवार्थसंवलितसमुदायार्थबोधिकात्वम्।

४. व्यपेक्षावादिनः के ? - नैयायिकमीमांसकादयः।

५. यन्न अर्थवत् तत् किं न ? - प्रातिपदिकम्।

६. प्रत्ययानां का व्युत्पत्तिः ? - प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्।

७. रूढिः कमर्थमपहरति ? - योगार्थम्।

८. समासे कीदृशी शक्तिः ? - अवयवार्थेतरा समुदायार्थरूपा।

९. शब्दः कतिविधः ? - चतुर्विधः।

१०. शब्दभेदाः के ? - रूढः, योगरूढः, यौगिकः, यौगिकरूढः।



# प्रौढमनोरमा

## संज्ञाप्रकरणम्

१. प्रौढमनोरमाग्रन्थस्य रचयिता कः ? - भट्टोजिदीक्षितः।
२. शब्दरत्नटीकाकारः कः ? - श्रीहरिदीक्षितः।
३. ज्योत्स्नाटीकाकारः कः ? - जगन्नाथशास्त्रिपाण्डेयः।
४. हकारस्य पूर्वोपदेशः किमर्थः ? - अट्अश्हश्इण्ग्रहणेषु हकारग्रहणार्थः
५. हकारस्य परोपदेशः किमर्थः ? - वल्रल्झल्शल्षु हकारग्रहणार्थः।
६. हस्य ल् इति व्याख्याने षष्ठ्यर्थः कः ? - सामीप्यम्।
७. हल् च ल् च हल् इति समाहारद्वन्द्वे लकारस्य लोपः केनेत्युक्तम् ?
- संयोगान्तस्य लोपः (८-२-२३)
८. ब्राह्मणकम्बलः इत्युक्ते किं न प्रतीयते ? - ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलः।
९. हल् इति समाहारे संयोगान्तलोपः कुतो न ? - यणः प्रतिषेधात्।
१०. पदार्थबोधं विना कः बोधः न सम्भवति ? - वाक्यार्थबोधः।
११. प्रौढमनोरमाकारमते उपदेश इत्यत्र घञर्थः कः ? - भावः।
१२. अनुनासिक इत्यत्र कः योगाश्रयः ? नासिकामनुगतः।
१३. प्रतिज्ञायते अभ्युपगम्यते का ? - प्रतिज्ञा।
१४. प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णाः यत्र सः कः ? - प्रत्याहारः।
१५. माहेश्वरसूत्रमाधृत्य कति प्रत्याहाराः? - एकचत्वारिंशत्।
१६. ऊकालः इत्यत्र कोऽयं विग्रहः ? - वः कालः यस्य सः।
१७. ऊशब्देन किं लक्ष्यते ? - स्वोच्चारणकालः।
१८. मुखं च नासिका च इति विग्रहे किं रूपम् ? - मुखनासिकम्।
१९. मुखनासिका इति कथम् ? - मुखसहिता नासिका इति विग्रहे।
२०. आस्ये भवं किम् ? - आस्यं ताल्वादि।
२१. नासिका च इत्यनेन चकारेण किं समुच्चीयते ? - स्वस्ववर्गानुकूलं ताल्वादि।
२२. एदैतोः इत्यादौ तपरत्वं किमर्थम् ? - असन्देहार्थम्।
२३. पूर्वत्रासिद्धम् (८-२-१) सूत्रे कीदृशमसिद्धम् ? - शास्त्रासिद्धम्।
२४. पूर्वत्रासिद्धे किं नास्ति ? - विप्रतिषेधः।
२५. ऋलृवर्णयोः इत्यत्र कः विग्रहः ? - आ च आ च रलौ, रलौ वर्णौ ययोः तौ, तयोः।

२६. नाज्झलौ (१-१-१०) इत्यत्र कः प्रश्लिष्टः ? - आकारः।
२७. भूवादयः अत्र कः विग्रहः ? - भूश्च वाश्च भूवौ, भूवौ आदी येषां ते।
२८. आदिशब्दयोः कः अर्थः ? - व्यवस्था, प्रकारः।
२९. द्रव्यं नाम किम् ? - लिङ्गसंख्यान्वितम्।
३०. निस् इति उपसर्गस्य सत्त्वे किं प्रमाणम् ? - निसस्तपतौ (८-३-१०२)
३१. निरः इति उपसर्गस्य सत्त्वे किं प्रमाणम् ? - निरः कुषः (७-२-४६)

## परिभाषाप्रकरणम्

३२. त्यदादीनामः (७-२-१०२) इत्यादौ इकः कुतः नोपतिष्ठते ?
- गुणमुक्त्वा गुणाविधानात्।
३३. इको गुणवृद्धी (१-१-३) अत्र इकः इति का विभक्तिः ? - प्रथमा।
३४. भाष्ये तच्छेषादिपक्षं दूषयित्वा कः पक्षः समर्थितः ? - पदोपस्थितिपक्षः।
३५. स्थानेयोगा अत्र कथं विग्रहः ? - स्थानेन योगः अस्याः।
३६. तस्मिन्निति केषामनुकरणम् ? - औपश्लेषिकार्थसप्तमीनाम्।
३८. निः शब्दस्य कोऽर्थः ? - नैरन्तर्यम्।
३९. वृत्तिकृता शितः किमुदाहरणमुक्तम् ? - जश्शसोः शिः (७-१-२०)
४०. किं नाम नित्यत्वम् ? - कृताकृतप्रसङ्गित्वम्।

## अच्सन्धिप्रकरणम्

१. इको यणचि (६-१-७७) इत्यादौ दीर्घादीनां ग्रहणं कथम् ?
- प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा।
२. व्यक्तिपक्षे इक्पदेन कति भेदाः गृह्यन्ते ? - षड्षष्टिः।
३. व्यक्तिपक्षे यणपदेन कति भेदाः ? - सप्त।
४. के स्थानिवद्भावं प्राप्नुवन्ति इति प्राचीनैरुक्तम् ?
- धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः।
५. स्थानिवत्सूत्रे अल् कः गृह्यते ? - स्थान्यवयवः।
६. अल्विधौ स्थानिवद्भावार्थं किं सूत्रम् ?- अचः परस्मिन्पूर्वविधौ (१-१-५७)
७. अचः परस्मिन्सूत्रे कयोरतिदेशः उक्तः ? - भावाभावयोः।

८. भावातिदेशः कः ? - स्थानिनि सति यद् भवति तदादेशेऽपि भवति।
९. अभावातिदेशः कः ? - स्थानिनि सति यन्न भवति तदादेशेऽपि न भवति।
१०. न पदान्तसूत्रे पदान्तशब्दस्य कोऽर्थः ? - पदस्य चरमावयवः।
११. संयोगान्तलोपे कस्य प्रतिषेधः उक्तः ? - यणः ।
१२. नार्कुटः इत्यत्र विसर्गः कुतो न ? - वृद्धेः असिद्धत्वात्।
१३. एत्येधत्यूठ्सु (६-१-८९) इत्यत्र एचि इति कयोः विशेषणम्? -एत्येधत्योः।
१४. षाष्ठं द्वित्वं कीदृशम् ? - द्विः प्रयोगो द्विर्वचनम्।
१५. माधवमते एचि इति एधतेः विशेषणम् आवश्यकं वा न वा ? - न।
१६. अक्षौहिणी अत्र कः विग्रहः। ऊहोऽस्त्यस्य ऊहिनी। अक्षाणाम् ऊहिनी।
१७. सीरदेवः अर्थवत्परिभाषायाः किं ज्ञापकम् आह ?

- व्रश्च.... (८-२-३६) सूत्रे राजेः पृथग् भ्राजिग्रहणम्।

१८. अन्तादिवच्च (६-१-६) केन सूत्रेण गतार्थम् ? स्थानिवत्सूत्रेण।
१९. प्रेजते इत्यत्र कः धातुः ? - एजृ दीप्तौ।
२०. एङ्‌यडि इत्येव सिद्धे परग्रहणं किमर्थम् ? - उत्तरार्थम्।
२१. नियोगः कः ? - अवधारणम्
२२. अन्धुः कः ? - कूपः।
२३. कः मार्तण्डः ? - मृताण्डादागतः (सूर्यः)।
२४. अकः सवर्णे दीर्घः (६-१-१०१) इत्यस्य स्थाने किं सुवचम् ?

- अकोऽकि दीर्घः।

२५. गवाक्षः अस्य कः विग्रहः ? - गवाम् अक्षि इव।
२६. हूतं नाम किम् ? - आह्वानम्।
२७. ''सर्वः प्लुतः साहसम्.... इत्यत्र साहसं नाम किम् ? - शास्त्रत्यागः।
२८. मणी वोष्ट्रस्य इत्यत्र कस्मिन्नर्थे वशब्दः अस्ति ? - इवार्थे।
२९. अस्मे इत्यस्य कोऽर्थः ? - अस्मभ्यम्।
३०. 'तदुक्तमृषिणा' इत्यादौ ऋषिः कः ? - वेदः।

## हल्सन्धिप्रकरणम्

३१. स्तोः इति कः समासः ? समाहारद्वन्द्वः।
३२. स्तोः इति समाहारद्वन्द्वे पुंस्त्वं कथम् ? - सौत्रत्वात्।

३३. स्तोः श्चुना श्चुः (८-४-४०) सूत्रे निमित्तस्थानिनोः कुतः यथासंख्यं न?
- शात् (८-४-४४) इति ज्ञापकात्।

३४. अल्पाच्तरम् (२-२-३४) इत्यत्र कुतः श्चुत्वं न ? - सौत्रत्वात्।

३५. ष्टुना ष्टुः (८-४-४१) इत्यस्य स्थाने किं सुवचम् ? - ष्टौ ष्टुः।

३६. तच्छिवः इत्यत्र सन्धिच्छेदः कथम् ? - तद् + शिवः।

३७. पौष्करसादिः अत्र कः विग्रहः ? - पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्।
तस्य अपत्यं पुमान्।

३८. विकल्पद्वयमध्ये 'ङमो ह्रस्वात्' 'इति सूत्रपाठात् नित्यग्रहणं कुतः?
- विस्पष्टार्थम्।

३९. ङ्मुटः परादित्वे किं प्रयोजनम् ? - कुर्वन्नास्ते इत्यत्र णत्वप्रतिषेधः।

४०. परमदण्डिनौ इत्यत्र कुतः न नुट् ?
- उत्तरपदत्वे चापदादिविधौ इति प्रत्ययलक्षणनिषेधात्।

४१. अत्रानुनासिकः पूर्वस्य तु वा (८-३-२) सूत्रे किं द्वैतम् ? - अधिकारो
विधिर्वा। अग्रेऽनुस्वारविधानात्।

४२. अत्रानुनासिकसूत्रे वाग्रहणं किमर्थम् ? - स्पष्टार्थम्।

४३. अनुनासिकात् परोऽनुस्वारः (८-३-४) सूत्रे कस्मिन्नर्थे पञ्चमी ?
- अनुनासिकं विहाय।

४४. अनुनासिकात्सूत्रे अनुस्वारस्य आगमत्वं कथं लभ्यते ? - परशब्देन।

४५. इकारोपरि विसर्गपाठे कः दोषः? - पयःसु, यशःसु इत्यादौ सस्य षत्वं स्यात्।

४६. विसर्गस्य अकारोपरि पाठे हरिः इत्यादौ यण् कुतो न ?
- त्रिपादीस्थत्वेन विसर्गस्यासिद्धत्वात्।

४७. पुमः खय्यम्परे (८-३-६) इत्यत्र पुमः इति कथम् ?
- कृतसंयोगान्तलोपानुकरणम्।

४८. पुंख्यानम् इत्यत्र कः धातुः प्रत्ययश्च ? - चक्षिङ्। ल्युट्।

४९. माधवेन ख्शादिरादेशः कुत्र इत्युक्तम् ? - आर्धधातुकेषु एव।

५०. बहवः पुमांसः यस्मिन् तत् किं रूपम् ? - बहुपुम्।

५१. नॄन्पे (८-३-१०) इत्यत्र पकारोपर्यकारः किमर्थः ? - उच्चारणार्थः।

५२. कान् कान् पश्यसि इत्यस्य कः अर्थः ? - कान् कुत्सितान् पश्यसि।

५३. कौतस्कुतः इत्यस्य कः अर्थः ? - कुतः कुतः आगतः।

५४. अग्निः करोति इत्यादौ विसर्गस्य प्रत्ययत्वं कथम् ? - स्थानिवद्भावेन।

५५. अयस्कर्णी अस्य कः विग्रहः ? - अयः इव कर्णौ यस्याः सा।

५६. भो भगो अघो अपूर्वस्य योऽशि (८-३-१७) सूत्रे सन्धिः कुतो न ?
- सौत्रत्वात्।

५७. वृक्षव् करोति इत्यादौ हलि सर्वेषाम् (८-३-२२) सूत्रेण वलोपः कुतो न ?
- अश्रूपे हलि इति विशेषणात्।

५८. पूर्वत्रासिद्धे विप्रतिषेधः कुतो नास्ति ? - उत्तरस्य अभावात्।

५९. एतत्तदोस्सूत्रे 'अकोः' इति ग्रहणं किं ज्ञापयति ? - तन्मध्यपतितपरिभाषाम्।

६०. एतत्तदोस्सूत्रे सु इति कीदृशं पदम् ? - लुप्तषष्ठीकम्।

## षड्लिङ्गप्रकरणम्।

१. अर्थवत् इत्यत्र कस्मिन्नर्थे मतुप् ? - प्रशसांयाम्।

२. प्रशंसामूलं किम् ? - एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वम्।

३. परमार्थतः कः अर्थवान् ? - स्फोटः।

४. कः विभागः कल्पितः ? - प्रकृतिप्रत्ययविभागः तत्तदर्थविभागश्च।

५. क्रियावाचकत्वं विना किं न युज्यते ? - धातुत्वम्।

६. 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते 'इति केनोक्तम् ? - भर्तृहरिणा।

७. स्वार्थिकप्रत्ययानां कथमर्थवत्त्वम् ? - प्रकृत्यर्थेनैव।

८. अर्थवत्सूत्रे अधातुप्रत्ययौ इति सिद्धे नञ्द्वयं किमर्थम् ? - स्पष्टार्थम्।

९. प्रातिपदिकम् इति महासंज्ञाकरणं किमर्थम् ? - अथर्वणवेदानुरोधात्।

१०. अथर्वणे प्रातिपदिकसंज्ञाविषये किमुपपद्यते ? - को धातुः ?
कः प्रत्ययः ? किं प्रातिपदिकम् ? इति।

११. अर्थवत्सूत्रसत्त्वे किं नियमार्थत्वं भवति ? - कृत्तद्धितसूत्रे समासग्रहणम्।

१२. असमर्थसमासे प्रातिपदिकसंज्ञा कथम् ? - धर्मिग्राहकमानात्।

१३. उपोचारितं पदं किम् ? - उपपदम्।

१४. जन्मवान् इत्यादौ प्रातिपदिकसंज्ञार्थं नियमे किं योजनीयम् ?
- उत्तरस्तु प्रत्ययो न।

१५. कृत्तद्धितसूत्रे चकारः किमर्थः ? - अनुक्तसमुच्चयार्थः।

१६. लिङ्गविशिष्टस्य इत्यस्य कोऽर्थः ? - लिङ्गबोधकप्रत्ययविशिष्टस्य इत्यर्थः।

१७. सुपः प्रागेव ङ्यापौ प्रवर्तेते कथम् ? - स्वार्थप्रयुक्तकार्याणां क्रमिकत्वस्वीकारात्।

१८. ङसिप्रत्यये इकारः किमर्थः ?

- युष्मदस्मद्भ्यां ङसोऽश् (७-१-२७) सूत्रेऽग्रहणार्थम्।

१९. औट्प्रत्यये टकारः किमर्थः ? - सुट् इति प्रत्याहारार्थः।

२०. सुप्प्रत्यये पकारः किमर्थः ? - सुप् इति प्रत्याहारार्थः।

२१. सम्यग् ज्ञानं किम् ? - संज्ञा।

२२. सरूपसूत्राभावे किमनिष्टं स्यात् ? - प्रत्येकं विभक्तिः द्वन्द्वश्च।

२३. एकशेषे आरब्धे द्वन्द्वः कुतो न ? - अनेकसुबन्तविरहात्।

२४. सरूपाण्येव इति नियमात् किं सिध्यति ?

- जननीपरिच्छेत्तृवाचिनोः मातृशब्दयोः न एकशेषः।

२५. यः शिष्यते सः किम् अभिधत्ते ? - लुप्यमानमर्थम्।

२६. सरूपसूत्रे रूपशब्दार्थः कः ? - रूप्यते बोध्यते इति रूपमर्थः।

२७. सर्वं शास्त्रीयकार्यं कुत्र प्रवर्तते ? - अलौकिकेषु एव।

२८. हूहूः इति केषां संज्ञा ? - गन्धर्वाणाम्।

२९. वर्षाभूः कः ? - मण्डूकः।

३०. ग्लौः कः ? - चन्द्रः।

३१. रैशब्दस्य कोऽर्थः ? - धनम्।

३२. रमा इत्यत्र कथं प्रातिपदिकत्वम् ? - लिङ्गविशिष्टपरिभाषया।

३३. सर्वनाम्नोऽसुङ् इति सूत्रिते सति किं न सिध्यति ? - अमुष्यै इत्यादि।

३४. गार्गी माता अस्य इति किं रूपम् ? - गार्गीमातृकः।

३५. ङिति ह्रस्वश्च (१-४-६) इति कीदृशी विभाषा ? - अप्राप्तविभाषा।

३६. अतोऽम् (७-१-२४) इति अमः अम्विधानं किमर्थम् ? - लुग्बाधनार्थम्।

३७. शि सर्वनामस्थानम् (१-१-४२) सूत्रे शि कीदृशः निर्देशः ? - अविभक्तिकः।

३८. सर्वनामस्थानम् इति महासंज्ञाकरणं कुतः ? - पूर्वाचार्यानुरोधात्।

३९. सान्त महतः संयोगस्य (६-४-१०) सूत्रे किमिदं सान्तेति ?

- लुप्तषष्ठीकं पृथक्पदम्।

४०. सम्भवति सामानाधिकरण्ये कस्य अन्याय्यत्वम् ? - वैयधिकरण्यस्य।

४१. बह्व्यः श्रेयस्यः यस्य तत् बहुश्रेयसी कुलम् अत्र कुतः नपुंसकह्रस्वो न ?

- ईयसो बहुव्रीहेर्न इति निषेधात्।

४२. दीक्षितमतानुसारं दादेर्धातोर्घः (८-२-३२) सूत्रे किमावर्तते ? - धातोः इति।

४३. शब्दरत्नकारमते दादेर्धातोर्घः (८-२-३२) सूत्रे किमावर्तते ? - दादेः इति।

४४. इदमादीनां सामान्यतः किं वैलक्षण्यमुक्तम् ? -

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्।।

४५. थो न्थः (७-१-८७) सूत्रे स्थान्यादेशौ कीदृशौ ? - अनच्कौ।

४६. पन्थानमात्मनः इच्छति किं रूपम् ? - पथीयति।

४७. अष्टाभिः इत्यत्र कः स्वरः विधीयते ? - विभक्त्युदात्तः।

४८. खञ्जतीति खन् अत्र कः धातुः ? - खजि गतिवैकल्ये।

४९. ङे प्रथमयोरम् (७-१-२८) सूत्रस्थाने किं सुवचम् ? - ङेसुटोरम्।

५०. अङ्गवृत्ते पुनर्वृत्तावविधिः इति परिभाषायाम् अङ्गवृत्तं नाम किम् ?

- अङ्गे अङ्गाधिकारे वृत्तं वर्तनं यस्य तत्।

५१. आकमादेशे दीर्घोच्चारणं किमर्थम् ? - पररूपाभावार्थं, सवर्णदीर्घार्थम्।

५२. जक्षित्यादयः षट् (६-१-६) इत्यत्र कीदृशः बहुव्रीहिः ? - अतद्गुणसंविज्ञानः।

५३. गुप् कः विग्रहः ? - गोपायति।

५४. युष्मदस्मद्भ्यां ङसोऽश् (७-२-८६) सूत्रे शित्त्वं किमर्थम् ? - सर्वादेशार्थम्।

५५. युवावौ द्विवचने (७-२-९२) सूत्रे द्विवचनशब्दः किम्परः ? - अर्थपरः।

५६. दर्शनं पश्यः इति भावे शः कथम् ? - निपातनात्।

५७. उभे अभ्यस्तम् (६-१-५) सूत्रे द्वे इत्यनुवृत्त्यैव सिद्धे उभग्रहणं किमर्थम् ?

- समुदायप्रतिपत्त्यर्थम्।

५८. अमुना इति वक्तव्ये न मुने (८-२-३) इति किमर्थम् ? - योगविभागार्थम्।

५९. नहो धः (८-२-३४) सूत्रे दः इति कुतो नोक्तम् ?

- नद्धमित्यादौ रदाभ्याम्....(८-२-४२) इति नत्वं स्यात्।

६०. अद्धाशब्दस्य कोऽर्थः ? - स्फुटम् अवधारणञ्च।

६१. आर्यहलम् इत्युक्ते कोऽर्थः ? - बलात्कारः।

६२. अम्शब्दस्य कोऽर्थः ? - शीघ्रम् अल्पञ्च।

६३. मङ्क्षुशब्दस्य कोऽर्थः ? - शीघ्रम्।

६४. झग् इति शब्दस्य कोऽर्थः ? - झटिति।

६५. सुदि इति शब्दस्य कोऽर्थः ? - शुक्लपक्षः।

६६. वदि इति शब्दस्य कोऽर्थः ? - कृष्णपक्षः।

६७. माकिः, माकिम्, नकिः एषां त्रयाणां कोऽर्थः ? - वर्जनम्।

६८. पशु इति शब्दस्य कोऽर्थः ? - सम्यग्।
६९. शुकम् इति शब्दस्य कोऽर्थः ? - शीघ्रम्।
७०. आतः इति शब्दस्य कोऽर्थः ? - इतोऽपि।
७१. पिबध्यै इत्यत्र कः प्रत्ययः? - शध्यै।

## स्त्रीप्रत्ययप्रकरणम्

७२. स्त्रीप्रत्ययेषु तदन्तविधिः कथं ज्ञाप्यते ?
- अमहत्पूर्वग्रहणेन अनुपसर्जनाधिकारेण च।

७३. प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः (७-३-४४) सूत्रे कात् इति किं विवक्षितम् ? - क् इति व्यञ्जनमात्रम्।

७४. अनुवादे कासाम् अनुपस्थितिः ? - परिभाषाणाम्।
७५. अष्टका इत्यत्र कः विग्रहः ? - अश्नन्ति ब्राह्मणाः यस्यां सा।
७६. अष्टिका इत्यत्र कः विग्रहः ? - अष्टौ परिमाणम् अस्याः।
७७. सङ्काशेन निर्वृत्तम् इत्यर्थे किं रूपम् ? - साङ्काश्यम्।
७८. शुभं याति इत्यस्य किं रूपम् ? - शुभंयाः।
७९. स्वशब्दस्य स्त्रीत्वं केषु अर्थेषु नास्ति ? - आत्मज्ञातिधनेषु।
८०. शुभ्रः अजः अस्याः किं रूपम् ? - शुभ्राजिका।
८१. प्रियज्ञिका अत्र कः विग्रहः ? - प्रियः ज्ञः अस्याः।
८२. प्राचां ष्फ तद्धितः (४-२-१७) सूत्रे तद्धितग्रहणं किमर्थम् ?
- प्रातिपदिकसंज्ञार्थम्।

८३. आयनेयीनीयियः.... (७-१-२) सूत्रे फकारादिषु अकारः किमर्थः ?
- उच्चारणार्थः।

८४. वृद्धकुमारी इति कीदृशः प्रयोगः ? - गौणः।
८५. काण्डं नाम किम् ? - षोडशहस्तप्रमाणः दण्डः।
८६. द्विपुरुषा=गौः अत्र कः विग्रहः ? - द्वाभ्यां पुरुषाभ्यां क्रीता।
८७. दामहायनान्ताच्च (४-१-२७) सूत्रे अन्तग्रहणं किमर्थम् ? - स्पष्टार्थम्
८८. लिङ्गं किमर्थम् अशिष्यम् ? - लोकाश्रयत्वात् लिङ्गस्य।
८९. तद्धिताः (४-१-७६) सूत्रम् अन्वर्थसंज्ञं कथम् ? - तेभ्यः प्रयोगेभ्यः हिताः।
९०. युवतीशब्दस्य का व्युत्पत्तिः ? यौति मिश्रीकरोति पत्या इति।

## कारकप्रकरणम्

९१. प्रातिपदिकार्थसूत्रे मात्रशब्दस्य कोऽर्थः ? - अवधारणम्।

९२. कृष्णशब्दः कस्मिन् अर्थे नियतलिङ्गः ? - वासुदेवे भगवति।

९३. वचनं संख्या इति कथमुक्तम् ? - प्राचां व्यवहारात्।

९४. प्रातिपदिकार्थसूत्रस्य किं सारम् ? - अर्थे प्रथमा इत्येव।

९५. प्राचा प्रातिपदिकार्थः कः उक्तः ? - सत्ता।

९६. राम मां पाहि इति वाक्यस्य कः बोधः ?

- रामसम्बन्धिसम्बोधनविषयः मत्कर्मकरक्षणम् इति।

९७. कर्तुरीप्सिततमं कर्म (१-४-४९) सूत्रे कर्तुः इति षष्ठी केन ?

- क्तस्य च वर्तमाने (२-३-६७)

९८. कर्ता कः ? - धातूपात्तव्यापाराश्रयः।

९९. कारके (१-३-२३) इति सूत्रे सप्तमी कस्मिन्नर्थे ? - प्रथमार्थे।

१००. अनभिहिते (२-३-१) सूत्रारम्भः कस्मिन् पक्षे ? - संख्या विभक्त्यर्थः इति पक्षे।

१०१. कस्मिन्पक्षे प्रातिपदिकार्थसूत्रं प्रत्याख्यातमाकरे ? - कारकं विभक्त्यर्थः।

१०२. पाचकः इत्यादेः कोऽर्थः ? - पाककर्तृकं गमनम्।

१०३. पश्य मृगो धावति इत्यादौ कः बोधः ? मृगकर्तृकं धावनकर्मकं दर्शनम्।

१०४. पचति भवति इत्यस्य कोऽर्थः ? - पचिक्रिया भवति।

१०५. प्राप्तानन्द इत्यस्य कोऽर्थः ? - आनन्दकर्तृकप्राप्तिकर्मीभूतः।

१०६. गां दोग्धि पयः वाक्यस्य कोऽर्थः ? - गोसम्बन्धिपयःकर्मकं दोहनम्।

१०७. प्रत्यवसानं नाम किम् ? - भक्षणम्।

१०८. शब्दकर्माणः अत्र कः विग्रहः ? - शब्दः कर्म (कारकम्) येषां ते।

१०९. स्वातन्त्र्यं नाम किम् ? - धातूपात्तव्यापाराश्रयत्वमेव।

११०. उभयतः कृष्णम् इत्यस्य कोऽर्थः ? - कृष्णस्य पार्श्वद्वये।

१११. अन्तरा त्वां मां हरिः अस्य कोऽर्थः ? - तव मम च मध्ये हरिः।

११२. वृक्षं प्रति अस्य कोऽर्थः ? - वृक्षसम्बन्धि द्योतनम्।

११३. किं नाम प्रकृष्टम् ? - यद्व्यापारादनन्तरं क्रियानिष्पत्तिः तद्।

११४. द्विद्रोणम् इत्यस्य कोऽर्थः ? - द्रोणद्वयसम्बन्धिधान्यम्।

११५. कृतं विश्वं येन सः कृतविश्वः अस्य कोऽर्थः ? - विश्वकर्मककृत्याश्रयः।

११६. पुत्रेण सह आगतः पिता अत्र पुत्रः कथमप्रधानः ?

- पुत्रस्य क्रियायामार्थसम्बन्धत्वात्।

११७. क्रयः नाम कः ? - धनाद्यर्पणेन आत्यन्तिकस्वीकरणम्।

११८. भक्तिर्ज्ञानाय कल्पते अस्य कोऽर्थः ? - भक्तिः ज्ञानात्मना परिणमते।

११९. पर्वतात्पततः अश्वात् पतति अत्र कः बोधः ?

- पर्वतावधिकपतनाश्रयः अश्वः तदवधिकं देवदत्तादिनिष्ठपतनम्।

१२०. कृतपूर्वी इत्यस्य कोऽर्थः ? - पूर्वं कृतवान्।

१२१. समासान्तः इत्यस्य कोऽर्थः ?

- समासस्य समासार्थोत्तरपदस्य वा चरमावयवः।

१२२. वृत्तिविषये अक्षिशब्दः किम्परः ? - इन्द्रियमात्रपरः।



# व्याकरणमहाभाष्यम्

## पस्पशाह्निकम्

१. व्याकरणमहाभाष्यस्य रचयिता कः ? - पतञ्जलिः।
२. पस्पशं नाम किम् ? - पुनः पुनः अतिशयेन वा चर्चितम्।
३. आह्निकं नाम किम् ? - अह्ना निर्वृत्तम्।
४. महाभाष्ये पतञ्जलेः प्रथमं वाक्यं किम् ? - अथ शब्दानुशासनम्।
५. प्रदीपव्याख्याकर्ता कः ? - कैयटः।
६. उद्योतव्याख्याकर्ता कः ? - नागेशभट्टः।
७. 'अथ शब्दानुशासनम्' इत्यत्र अथशब्दस्य कोऽर्थः ? - अधिकारः।
८. शब्दानुशासनं नाम किम् ? - पदशास्त्रम्।
९. शब्दानामनुशासनं शब्दानुशासनम् अत्र कस्मिन्नर्थे षष्ठी ? - कर्मणि।
१०. केषां शब्दानाम् अनुशासनं क्रियते ? - लौकिकानां वैदिकानाञ्च।
११. लोके विदिताः लौकिकाः अत्र केन ठञ्?-लोकसर्वलोकाट्ठञ् (५-१-४४)
१२. लोके भवाः लौकिकाः अत्र केन ठञ् ? - अध्यात्मादेष्ठञिष्यते (वा)
१३. वेदे भवाः वैदिकाः अत्र केन ठञ् ? - अध्यात्मादेष्ठञिष्यते (वा)
१४. सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं किं भवति ? - द्रव्यम्।
१५. इङ्गित चेष्टितं निमिषितं किं भवति? - क्रिया।
१६. चेष्टितं नाम किम् ? - कायपरिस्पन्दः।
१८. निमिषितं नाम किम् ? - अक्षिव्यापारः।
१९. शुक्लः, नीलः, कपिलः, कपोतः किं भवति ? - गुणः।
२०. भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं किं भवति ? - आकृतिः।
२१. आकृतिः अस्य व्युत्पत्तिः का ? - आक्रियते व्यवच्छिद्यते स्वाश्रयः अनया।
२२. शब्दः कः ? - येनोच्चारितेन सास्नादीनां सम्प्रत्ययो भवति सः।
२३. शब्दस्य अपरं लक्षणं किम् ? - प्रतीतपदार्थको ध्वनिः।
२४. व्याकरणाध्ययनस्य मुख्यप्रयोजनानि कति ? - पञ्च।
२५. व्याकरणाध्ययनस्य मुख्यप्रयोजनानि कानि ? - रक्षोहागमलघ्वसन्देहाः।
२६. व्याकरणाध्ययनस्य आनुषङ्गिकप्रयोजनानि कति ? - त्रयोदश।
२७. कः सम्यग् वेदान् परिपालयिष्यति ? - लोपागमवर्णविकारज्ञः।
२८. षट्सु अङ्गेषु किं प्रधानम् ? - व्याकरणम्।

२९. शब्दज्ञाने लाघवं किं विवक्षितम् ?

- प्रतिपदपाठापेक्षया प्रकृत्यादिविभागान्वाख्यानम्।

३०. असन्देहः इत्यत्र कः अभावः ? - प्रागभावः।

३१. स्थूलपृषती इत्यत्र पूर्वपदप्रकृतिस्वरे कः समासः ? - बहुव्रीहिः।

३२. स्थूलपृषती अत्र अन्तोदात्तत्वे कः समासः ? - कर्मधारयः।

३३. असुराः किं कुर्वन्तः पराबभूवुः ? - हेऽलयो हेऽलयः इति।

३४. कीदृशः शब्दः तमर्थं नाह ? - स्वरतः वर्णतः मिथ्याप्रयुक्तः दुष्टः।

३५. वाग्वज्रः कं हिनस्ति ? - यजमानम्।

३६. किं तत् न ज्वलति ? - अनग्नौ शुष्कैधः।

३७. गौरित्यस्य के अपभ्रंशाः ? - गावी, गोणी, गोता, गोपोतलिका इत्येवमादयः।

३८. भ्राजाः नाम श्लोकाः केन प्रणीताः ? - कात्यायनेन।

३९. यदुदुम्बरवर्णानाम् इत्यादिश्लोकः कुतः न प्रमाणम् ? - प्रमत्तगीतत्वात्।

४०. प्रत्यभिवादे गुरुणा किं कार्यम् ? - नाम्नः प्लुतः कार्यः।

४१. ऋत्विजमर्हति इति आर्त्विजीनः कः ? - यजमानः।

४२. ऋत्विक्कर्म अर्हति इति आर्त्विजीनः कः ? - याजकः।

४३. 'चत्वारि शृङ्गा' इत्यादिमन्त्रे चत्वारि नाम कानि ? - पदजातानि।

४४. 'चत्वारि शृङ्गा' इत्यादिमन्त्रे सप्त के ? - विभक्तयः।

४५. कः वाचं पश्यन्नपि न पश्यति ? - अविद्वान् (अवैयाकरणः)

४६. वाक् कस्मै तनुं विवृणुते ? - वैयाकरणाय।

४७. त्रिपुरुषानूकम् अत्र कः विग्रहः ?

- त्रयः पुरुषाः त्रिपुरुषाः। तान् अनुकायति इति।

४८. किमर्थं शब्दोपदेशः कर्तव्यः ? - लघुत्वात्।

४९. शब्दानां प्रतिपत्तौ कः अनभ्युपायः ? - प्रतिपदपाठः।

५०. विद्या कतिभिः प्रकारैः उपयुक्ता भवति ? - चतुर्भिः।

५१. के च ते विद्योपयोगप्रकाराः ? - आगमस्वाध्यायप्रवचनव्यवहारकालाः।

५२. आगमकालः कः ? - ग्रहणकालः।

५३. वैयाकरणमते आकृतिः वा द्रव्यं वा पदार्थः ? - उभयम्।

५४. शब्दः नित्यः उत अनित्यः इति कुत्र प्राधान्येन परीक्षितम् ? - सङ्ग्रहे।

५५. सङ्ग्रहग्रन्थस्य प्रणेता कः ? - व्याडिः।

५६. सङ्ग्रहे कति श्लोकाः सन्ति ? - लक्षम्।

५७. पाणिनेः लक्षणं कथं प्रवृत्तम् ? - शब्दार्थसम्बन्धं नित्यं मत्वा।
५८. सिद्धशब्दः नित्यपर्यायः इत्यत्र कः ग्रन्थः प्रमाणम् ? - सङ्ग्रहः।
५९. कूटं नाम किम् ? - अयोघनः।
६०. 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिके सिद्धशब्द एव किमर्थः ? - मङ्गलार्थः।
६१. लोकतः शब्दार्थसम्बन्धनित्यत्वे सिद्धे शास्त्रेण किं क्रियते ? - धर्मनियमः।
६२. अध्वर्युशाखाः कति ? - १००
६३. सामशाखाः कति ? - १०००
६४. अथर्वणशाखाः कति ? - ९
६५. ऋक्शाखाः कति ? - २१
६६. शवधातुः कम्बोजेषु कस्मिन्नर्थे प्रयुज्यते ? - गत्यर्थे।
६७. व्याकरणशास्त्रे म्लेच्छः नाम कः ? - अपशब्दः।
६८. व्याकरणशास्त्रस्य प्रथमप्रवक्ता कः ? - ब्रह्मा
६९. सूत्रे व्याकरणे कः अनुपपन्नः ? - षष्ठ्यर्थः।
७०. किं व्याख्यानं भवति ? - उदाहरणं प्रत्युदाहरणं वाक्याध्याहारः इत्येतत्समुदितम्।
७१. किं नाम व्याकरणम् ? - लक्ष्यं लक्षणञ्च समुदितम्।
७२. व्यपदेशिवद्भावेन किं व्याकरणं भवति ? - सूत्रमपि।
७३. वर्णानामुपदेशः किमर्थः ? - वृत्तिसमवायार्थः।
७४. वृत्तिः नाम का ? - शास्त्रप्रवृत्तिः।
७५. समवायः नाम कः ? - वर्णानाम् आनुपूर्व्येण सन्निवेशः।
७६. उपदेशः कः ? - उच्चारणम्।
७७. कलः नाम कः ? - स्थानान्तरनिष्पन्नः काकलिकत्वेन प्रसिद्धः।
७८. ध्मातः नाम कः ? - श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्षितः।
७९. एणीकृतः कः ? - यत्रोच्चारणे अविशिष्टः अयम् ओकार उत औकार इति सन्देहः।
८०. अम्बूकृतः कः ? - यः व्यक्तः अपि अन्तर्मुखमिव श्रूयते।
८१. अर्धकः कः ? - यत्र दीर्घोऽपि ह्रस्व इव श्रूयते।
८२. ग्रस्तः कः ? - जिह्वामूले निगृहीतः।
८३. निरस्तः कः ? - निष्ठुरः।
८४. प्रगीतः कः ? - सामवदुच्चरितः।

८५. उपगीतः नाम कः ? - समीपवर्णान्तरगीत्या अनुरक्तः।
८६. क्ष्विण्णः नाम कः ? कम्पमानः इव श्रुतः।
८७. रोमशः कः ? - गम्भीरः।
८८. अवलम्बितः कः ? - वर्णान्तरसम्भिन्नः।
८९. निर्हतः नाम कः ? - रूक्षः।
९०. सन्दष्टः कः ? - वर्धितः इव।
९१. विकीर्णः कः ? - वर्णान्तरे प्रसृतः, एकोऽपि अनेकनिर्भासी।
९२. कलादयः के ? - स्वरदोषभावनाः।

## प्रत्याहाराह्निकम्

१. अकारस्य विवृतोपदेशः किमर्थः ? - आकारग्रहणार्थः।
२. विवृतस्य अकारस्य प्रयोजनमन्वाख्यायते इति कथं ज्ञायते ?
- अ अ (८-४-६८) इति सूत्रेण।
३. अस्य च्वौ (७-४-३२) इत्यादौ कुतः सवर्णाग्रहणम् ? - अनण्त्वात्।
४. यत्र अनेकविधमान्तर्यं तत्र किम् आन्तर्यं बलीयः ? - स्थानतः।
५. यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः कः उपदेष्टव्यः ? - लृकारः।
६. यदृच्छाशब्दः कः ?
- अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः प्रयोक्त्रभिप्रायेण प्रवर्तते।
७. सन्ध्यक्षराणि कानि ? - ए ओ ऐ औ।
८. सन्ध्यक्षरेषु तपरोच्चारणं कर्तव्यम् उत न ? - न।
९. अर्धम् एकारम् अर्धम् ओकराञ्च के उच्चरन्ति ? - सात्यमुग्रिराणायनीयाः।
१०. तपरस्तत्कालस्य (१-१-७०) सूत्रे कः तपरः ? - तात्परः, तः परः यस्मात् सः।
११. वर्णैकदेशाः वर्णग्रहणेन गृह्यन्ते उत न ? - न।
१२. द्विरुपदिष्टस्य हकारस्य प्रयोजनमस्ति उत न ? - अस्ति।
१३. रेफोष्मणां सवर्णाः ? - न सन्ति।
१४. द्वित्वस्य कौ न स्थानिनौ ? - रकारहकारौ।
१५. अयोगवाहानां कुत्र उपदेशः कर्तव्यः ? - अट्शर्प्रत्याहारयोः।
१६. अयोगवाहानाम् अट्सु पाठे किं प्रयोजनम् ? - उरःकेण।
१७. अर्थवन्तः वर्णाः उत अनर्थकाः ? - उभयम्।

१८. केऽर्थवन्तः ? - धातुप्रातिपदिकप्रत्ययनिपाताः एकवर्णाः।
१९. अपायः कः ? - लोपः।
२०. उपजनः कः ? - आगमः।
२१. विकारः कः ? - आदेशः।
२२. प्रत्याहारेऽनुबन्धानां ग्रहणं न इति कैः हेतुभिः उक्तम् ?
- आचारात्, अप्रधानत्वात्, लोपश्च बलवत्तरः।
२३. इण् प्रत्याहारः केन णकारेण ? - परेण।
२४. अणुदित्सूत्रे कः णकारः ? - परः।
३४. विनामः कः ? - णत्वम्।
३५. किं नाम अक्षरम् ? - न क्षरति, अश्नुते, वर्णः।
३६. व्याकरणान्तरे अक्षरस्य का संज्ञा उक्ता ? - वर्णः।
३७. अइउण् सूत्रस्य कः अर्थः ? - अः परमेश्वरः निर्गुणः इम्-मायामाश्रित्य
उः - व्यापकः सगुणः ण् - ईश्वरः आसीत्।
३८. ऋलृक्सूत्रस्य कोऽर्थः ? - ऋ-परमेश्वरः लृ - मायाख्यां मनोवृत्तिम्
क् - अदर्शयत्।
३९. एओङ्सूत्रस्य कोऽर्थः ? - ए - अक्षरात्मकः मायायुक्तः, ओ-अक्षरात्मकः
ज्ञानरूपः ङ् - एकः इति निर्णयः।
४०. ऐऔच्सूत्रस्य कोऽर्थः ? - ऐ - ब्रह्मस्वरूपः औ - स्वान्तर्गतं जगत् विस्तृतं
कर्तुम् च् - आविर्बभूव।

## तृतीयादिनवाह्निकपर्यन्तम्

१. वृद्धिरादैच् (१-१-१) सूत्रे कुत्वं कुतो न ? - भत्वात्।
२. तद्भावितं नाम किम् ? - तेन-वृद्धिशब्देन भावितम् - विहितम्।
३. तद्भावितातद्भावितयोर्मध्ये कः पक्षः स्वीकृतः ? - अतद्भावितः।
४. सिद्धान्ते संज्ञासम्प्रत्ययार्थः संज्ञाधिकारः ? - न कर्तव्यः।
५. अनाकृतिः का भवति ? - संज्ञा।
६. सामानाधिकरण्यमेकविभक्तिकत्वञ्च कयोः भवति ?
- विशेषणविशेष्ययोः संज्ञासंज्ञिनोः वा।
७. विशेषणविशेष्यभावः कयोः भवति ? - प्रतीतपदार्थकयोः द्वयोः।

८. गुणानां विषये भाष्यकारणां कः सिद्धान्तः ? - अभेदकाः ।
९. आकारस्य तपरकरणं किमर्थम् ? - तत्कालानां सवर्णानां ग्रहणार्थम्।
१०. तात्पर्येण तकारः किमर्थः ? - ऐजर्थः ।
११. इको गुणवृद्धी (१-१-३) कीदृशं सूत्रम् ? - परिभाषासूत्रम्।
१२. इग्ग्रहणं किमर्थम् ? - आत्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम्।
१३. भाष्ये कौ पक्षौ उद्धृतौ अत्र सूत्रे ? - तच्छेषतदपवादौ ।
१४. इदं परिभाषान्तरम् इति के पठन्ति ? - क्रोष्ट्रीयाः ।
१५. विप्रतिषेधसूत्रे परशब्दार्थः कः ? - इष्टम्।
१६. इक्सूत्रे सिद्धान्तभूतः पक्षः कः ? - पदोपस्थितिपक्षः ।
१७. इक्सूत्रे कीदृशी वृद्धिः वृद्धिपदेनोच्यते ? - इग्लक्षणा ।
१८. न धातुलोप आर्धधातुके (१-१-४) इति सूत्रेण किं विधीयते ?
- गुणवृद्धिनिषेधः ।
१९. न धातुलोपसूत्रे कीदृशः धातुलोपः अभिमतः ? - धात्वेकदेशलोपः ।
२०. न धातुलोपसूत्रे आर्धधातुकग्रहणस्य लोपविशेषणत्वे कः अर्थः ?
- आर्धधातुकनिमित्ते लोपे सति ये गुणवृद्धी तयोः निषेधः ।
२१. न धातुलोपसूत्रे आर्धधातुकस्य गुणवृद्धिविशेषणत्वे कः अर्थः ?
- धातुलोपे सति आर्धधातुकनिमित्ते ये गुणवृद्धी तयोः निषेधः ।
२२. भाष्ये इदं सूत्रं केन वार्तिकेन प्रत्याख्यातम् ? - अनारम्भो वा ।
२३. जीरदानुः इत्यत्र प्रकृतिप्रत्ययौ कौ ? - ज्या + रक्।
२४. न धातुलोपसूत्रस्य प्रत्याख्याने किं बीजम् ? - अल्लोपस्य स्थानिवद्भावः ।
२५. क्ङितिप्रतिषेधे तन्निमित्तग्रहणं किमर्थम् ? - उपधारोरवीत्यर्थम्।
२७. ङिदादेशः ङितः न भवन्ति इत्यत्र किं ज्ञापकम् ? - यासुटो ङिद्वचनम्।
२८. दीधीवेवीटाम् (१-१-६) इत्यत्र कौ छान्दसौ ? - दीधीवेव्यौ ।
२९. हलोऽनन्तराः संयोगः (१-१-७) इत्यनेन किं विधीयते ? - संयोगसंज्ञा ।
३०. अनन्तराः इत्यत्र कौ विग्रहौ ? - १) अविद्यमानम् अन्तरं येषां ते ।
२) अविद्यमाना अन्तरा येषां ते ।
३१. संयोगसंज्ञासूत्रे सहवचनं किमर्थम् ? - एकैकस्य संयोगसंज्ञावारणाय ।
३२. बहूनामानन्तर्ये केषां संयोगसंज्ञा ? - द्वयोः द्वयोः ।
३३. स्वरैः अनन्तर्हिताः हलः इति कथं ज्ञायते ? - अनन्तरग्रहणेन ।
३४. ग्रामो दग्धः इत्यत्र ग्रामशब्दः कस्मिन्नर्थे ? - शालासमुदाये ।

३५. ग्रामं प्रविष्टः इत्यत्र ग्रामशब्देन किमभिधीयते ? - वाटपरिक्षेपः।

३६. ग्रामः गतः / आगतः इत्यत्र ग्रामशब्दार्थः कः ? - मनुष्यः।

३७. ग्रामो लब्धः इत्यत्र ग्रामशब्दः कस्मिन्नर्थे ?

- सारण्यके ससीमके सस्थण्डिलके।

३८. मुखनासिकं वचनं यस्येति विग्रहे मुखनासिकावचनः इति दीर्घः कथम् ?

- निपातनात्।

३९. मुखनासिकावचनः अत्र चत्वारः विग्रहाः के ? -

१) मुखं च नासिका च मुखनासिकम्। मुखनासिकं वचनं यस्य सः।

२) मुखनासिकम् आवचनं यस्य सः।

३) मुखद्वितीया नासिका मुखनासिका। मुखनासिका वचनं यस्य सः।

४) मुखोपसंहिता नासिका मुखनासिका। मुखनासिका वचनं यस्य सः।

४०. मुखनासिकावचनः इत्यत्र आवचनं नाम किम् ? - ईषद्वचनम्।

४१. मुखनासिकासूत्रे मुखग्रहणं कथं प्रत्याख्यातम् ? - प्रासादवासिन्यायेन।

४२. तुल्यास्यप्रयत्नं सवर्णं (१-१-९) सूत्रेण का संज्ञा विधीयते ? - सवर्णम्।

४३. तुल्यास्यसूत्रे आस्यपदस्य व्युत्पत्तिः का ? - अस्यन्ति अनेन वर्णान्।

४४. अन्नमेतदास्यन्दते इत्यस्य किं रूपम् ? - आस्यम्।

४५. तुल्यास्यसूत्रे प्रयत्नशब्दार्थः कः ? - प्रयत्नम् (आभ्यन्तरप्रयत्नः)।

४६. प्रयत्नः अस्य का व्युत्पत्तिः ? - प्रपूर्वात् यततेः भावसाधनः नङ् प्रत्ययः।

४७. सवर्णसंज्ञायां भिन्नदेशेषु अतिप्रसङ्गः कथं भवति ? - प्रयत्नसामान्यात्।

४८. आस्ये भवम् आस्यं केन यत् ? - शरीरावयवाच्च (४-३-५५)

४९. आस्ये भवमास्यं किम् ? - स्थानं करणञ्च।

५०. नाज्झलौ (१-१-१०) सूत्रेण किं विधीयते ? - सवर्णसंज्ञानिषेधः।

५१. शकारस्य कथमच्त्वम् ? - इकारसवर्णग्रहणेन।

५२. नाज्झलौ (१-१-१०) सूत्रं कथं प्रत्याख्यातम् ?

- ईषद्विवृतम् ऊष्मणाम् इति व्याख्यानेन।

५३. प्रगृह्यसंज्ञाविधायकं प्रथमं सूत्रं किम्?- ईदूदेद्द्विवचनं प्रगृह्यम् (१-१-११)

५४. सिद्धः प्लुतः स्वरसन्धिषु इति कथं ज्ञायते ? - प्लुतस्य प्रकृतिभावविधानेन।

५५. प्लुतस्य प्रगृह्यसंज्ञावचने किं प्रयोजनम् ? - प्रकृतिभावसिद्धिः।

५६. ईदूदेत्सूत्रे के चत्वारः पक्षाः ? -

१. ईदादयो द्विवचनं प्रगृह्याः।

२. ईदाद्यन्तं द्विवचनं प्रगृह्यम्।

३. ईदाद्यन्तं द्विवचनान्तं प्रगृह्यम्।

४. ईदाद्यन्तं यद् द्विवचनं तदन्तं प्रगृह्यम्।

५७. तस्मादस्तु स एव मध्यमः पक्षः इत्यत्र मध्यमः कः ?
- द्वितीयः - ईदाद्यन्तं द्विवचनं प्रगृह्यम् इति पक्षः।

५८. अदसो मात्प्रगृह्यसंज्ञायां कस्य असिद्धत्वात् अयादयः प्राप्नुवन्ति ?
- मकारस्य।

५९. प्रगृह्यसंज्ञावचनसामर्थ्यात् के न भविष्यन्ति ? - अयादयः।

६०. मात्परे ये ईदादयः इति कथनेन कुत्र न प्रगृह्यम् ? - अमुकेऽत्र।

६१. काशे, कुशे इत्यादौ शे (१-१-१३) इति प्रगृह्यसंज्ञा कुतो न?
- अर्थवद्ग्रहणपरिभाषया।

६२. हरिशे, बभ्रुशे इत्यत्र शे (१-१-१३) इति कुतो न प्रगृह्यम् ?
- लक्षणप्रतिपदोक्तपरिभाषया।

६३. चकारात्र इत्यादौ प्रगृह्यसंज्ञा कुतो न ?
- निपात एकाजनाङ् (१-१-१४) सूत्रे निपातग्रहणात्।

६४. निपातसूत्रे एकाजिति किमर्थम् ? - प्रेदम् इत्यादौ प्रगृह्यवारणाय।

६५. निपातसूत्रे एकाजिति कः समासः ? - कर्मधारयः।

६६. आकारः (आङ् + आ) कुत्र ङित्, कुत्र अङित् ? -

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्।।

६७. अदोऽभवत् इत्यादौ ओत् (१-१-१५) सूत्रेण कथं न प्रगृह्यम् ?
- लक्षणप्रतिपदोक्तपरिभाषया।

६८. गोऽभवत् इत्यादौ ओत् (१-१-१५) सूत्रेण कथं न प्रगृह्यम् ?
- गौणमुख्यपरिभाषया।

६९. ईदूतौ च सप्तम्यर्थे (१-१-१९) सूत्रे अर्थग्रहणं किमर्थम् ?
- लुप्तायामपि सप्तम्यां प्रगृह्यार्थम्।

७०. इदूतौसूत्रे अर्थग्रहणस्य प्रयोजनान्तरं किमुक्तम् ? - समासे पूर्वपदस्य मा भूत्।

७१. दाधाघ्वदाप् (१-१-२०) सूत्रे प्रकृतिग्रहणं किमर्थम् ? - शिदर्थम्।

७२. घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् इति के पठन्ति ? - भारद्वाजीयाः।

७३. घुसंज्ञायां 'समानशब्दप्रतिषेधः' इति वार्तिकं कथं प्रत्याख्यातम् ?

- यदागमपरिभाषया।

७४. घुसंज्ञायां 'दीङः प्रतिषेधः स्थाघ्वोरित्त्वे' वार्तिकं कथं प्रत्याख्यातम् ?

- सन्निपातपरिभाषया।

७५. अदाप् इति प्रतिषेधे दैपः प्रतिषेधः कथम् ? - नानुबन्धकृतमनेजन्तत्वात्।

७६. आद्यन्तवदेकस्मिन् ? - (१-१-२१) कीदृशं सूत्रम् ? - अतिदेशः।

७७. आदिः कः ? - अन्यस्मिन् सति यस्मात् पूर्वः नास्ति।

७८. अन्तः कः ? - अन्यस्मिन् सति यस्मात् परं नास्ति।

७९. आद्यन्तवत्सूत्रस्थाने न्यासान्तरं किमुक्तम् ? - व्यपदेशिवदेकस्मिन्।

८०. अयमेव मे ज्येष्ठः, मध्यमः, कनिष्ठः इति व्यवहारः कदा ? - एकपुत्रसत्त्वे।

८१. असूतायाम् असोष्यमाणायां कः व्यपदेशः भवति ? - प्रथमगर्भेण हता इति।

८२. अनेत्य अनाजिगमिषुः किमाह ? - इदं मे प्रथममागमनमिति।

८३. नदीतरः इत्यत्र घसंज्ञा कुतो न ? - औपदेशिकतरपः अभावात्।

८४. घसंज्ञा कयोः प्रत्यययोः ? - तरप्तमपोः।

८५. संख्यासंज्ञासूत्रं किम् ? - बहुगणवतुडति संख्या (१-१-२३)

८६. संख्यासंज्ञायां संख्याग्रहणं किमर्थम् ? - संख्यासम्प्रत्ययार्थम्।

८७. कृत्रिमाकृत्रिमन्यायेन कस्य संख्यासंज्ञा न स्यात् ? - एकादिकशब्दस्य।

८८. नदीभिश्च (२-१-२०) सूत्रे बहुवचननिर्देशात् कस्याः ग्रहणम् ?

- अकृत्रिमायाः।

८९. शरत्प्रभृतिषु विपाट्शब्दस्य पाठात् किं ज्ञायते ?

- नदीपौर्णमासीत्यादिसूत्रे नदीपदेन गङ्गादीनां न ग्रहणम्।

९०. संख्यायतेऽनया संख्या इत्यन्वर्थसंज्ञया कस्या अपि संज्ञा भवति ?

- एकादिकायाः।

९१. शतानि, सहस्राणि इत्यादौ षट्संज्ञावारणाय किं कर्तव्यम् ? - उपदेशवचनम्।

९२. एकाग्नयः, एकहलानि इत्यादौ एकशब्दः कः ? - असाहायवाची।

९३. प्रजामेका रक्षति इत्यादौ एकशब्दः कः ? - अन्यवाची।

९४. लोतः, गर्तः इत्यादौ कुतो न निष्ठासंज्ञा ? - सानुबन्धकस्यैव निष्ठात्वात्।

९५. सर्वादीनि सर्वनामानि (१-१-२७) सूत्रे सर्वादीनि इति कः समासः ?

- बहुव्रीहिः।

९६. बहुव्रीहिभेदाः के ? - तद्गुणसंविज्ञानम्, अतद्गुणसंविज्ञानम्।

९७. चित्रवाससमानय इत्यत्र कीदृशः बहुव्रीहिः ? - तद्गुणसंविज्ञानबहुव्रीहिः।

९८. तद्गुणसंविज्ञानं नाम किम् ? - तस्य-अन्यपदार्थस्य, गुणानाम्-अवयवानाम्, संविज्ञानम्-ग्रहणम्।

९९. चित्रगुरानीयताम् अत्र कीदृशः बहुव्रीहिः ? - अतद्गुणसंविज्ञानबहुव्रीहिः।

१००. सर्वनामानि इत्यत्र पूर्वपदात्संज्ञायामगः (८-४-३) सूत्रेण णत्वं कुतो न ? - निपातनात्।

१०१. निपातनं नाम किम् ? - अविशेषेण किञ्चिदुक्त्वा विशेषेण न इति यदुच्यते तत्।

१०२. सकलम्, कृत्स्नम् इत्यादीनां सर्वनामसंज्ञा कुतो न ? - सर्वादिगणे पाठाभावात्।

१०३. उभशब्दस्य सर्वादिगणे पाठः किमर्थः ? - अकजर्थः।

१०४. उभयशब्दः कदा भवति ? - द्विवचनपरत्वाभावे।

१०५. सिद्धान्ते सर्वादिगणे उभशब्दस्य निष्प्रयोजनत्वं कथं साधितम् ? - स्वार्थिकानां प्रकृतिग्रहणेन ग्रहणात् केऽपि द्विवचनपरत्वात् सिद्धम्।

१०६. सर्वादिगणे भवत्शब्दस्य पाठः किमर्थः ? - अकच्छेषात्वार्थः।

१०७. विभाषा दिक्समासे बहुव्रीहौ (१-१-२८) सूत्रे दिग्ग्रहणं किमर्थम् ? - दिगुपदिष्टे विकल्पार्थम्, अन्यत्र प्रतिषेधार्थम्।

१०८. विभाषा दिक्सूत्रे समासग्रहणं किमर्थम् ? - मुख्यबहुव्रीहेः ग्रहणाय।

१०९. न बहुव्रीहौ (१-१-२९) सूत्रस्य किमुदाहरणम् ? - मत्कपितृकः।

१११. तृतीयासमासे (१-१-३०) सूत्रे समासपदेऽनुवर्तमाने पुनः समासग्रहणं किमर्थम् ? - असमासेऽपि सर्वनामसंज्ञानिषेधार्थम्।

११२. आत्माऽत्मीयज्ञातिधनवचनः शब्दः कः ? - स्वशब्दः।

११३. स्वमज्ञातिधनाख्यायाम् (१-१-३५) सूत्रे आख्याग्रहणं किमर्थम् ? - ज्ञातिधनार्थवाचिनोर्ग्रहणार्थम्।

११४. असर्वविभक्तौ अविभक्तिनिमित्तस्य उपसंख्यानं किमर्थम् ? - विना नाना इत्याद्यर्थम्।

११५. असर्वविभक्तिः इत्यत्र कः विग्रहः ? - न सर्वा असर्वा, असर्वा विभक्तिः यस्मात् सः।

११६. कृन्मेजन्तः (१-१-३९) सूत्रभाष्ये किं पक्षद्वयम् आपादितम् ? -

१) कृद् यः मकारान्तः।

२) कृदन्तं यद् मकारान्तम्।

११७. प्रत्ययलक्षणेन अव्ययसंज्ञा न भवति इत्यत्र किं मानम् ? - स्वरादिगणे प्रशान् शब्दपाठः।

११८. ग्रामणि कुलम् इत्यत्र ह्रस्वस्य पिति कृति तुक् (६-१-७१) सूत्रेण तुक् कुतः न ? - सन्निपातपरिभाषया।

११९. सुडनपुंसकस्य (१-१-४३) सूत्रे अनपुंसकस्येति कः समासः ? - असमर्थसमासः।

१२०. न वेति विभाषा (१-१-४४) सूत्रे इतिग्रहणं किमर्थम् ? - अर्थनिर्देशार्थम्।

१२१. न वेति सूत्रे समानशब्दप्रतिषेधस्य किमुदाहरणम् ? - न वा घटिका।

१२२. न वेति सूत्रे कतिविधा विभाषा प्रदर्शिता ? - त्रिविधा।

१२३. भाष्ये प्राप्तविभाषायाः किमुदाहरणम् ? - विभाषा विप्रलाभे (१-३-५०)

१२४. भाष्ये अप्राप्तविभाषायाः किमुदाहरणम् ? - ऊर्णोतेर्विभाषा (७-२-६)

१२५. भाष्ये उभयत्रविभाषायाः किमुदाहरणम् ? - विभाषा श्वेः (६-१-३०)

१२६. सम्प्रसारणं कस्य स्थाने प्रसज्यते ? - यणः।

१२७. सम्प्रसारणसंज्ञासूत्रे किं पक्षद्वयं प्रस्तुतम् ? - वाक्यस्य सम्प्रसारणम् उत वर्णस्य इति।

१२८. वाक्यस्य सम्प्रसारणसंज्ञा इत्यत्र वाक्यं नाम किम् ? - वाक्यार्थः।

१२९. वाक्यस्य सम्प्रसारणसंज्ञा चेत् कः विधिः न सिध्यति ? - वर्णविधिः।

१३०. यणः स्थाने इक् भवति चेत् का संज्ञा ? - सम्प्रसारणसंज्ञा।

१३१. सम्प्रसारणम्, सम्प्रसारणात्, सम्प्रसारणस्येत्येवं विभक्तिविशेषनिर्देशेन किं ज्ञायते ? - वर्णवाक्ययोः संज्ञा।

१३२. ष्यङः सम्प्रसारणम् (६-१-१३) इति निर्देशेन किं ज्ञायते ? - वाक्यसंज्ञा।

१३३. आद्यन्तौ टकितौ (१-१-४६) इति कीदृशं सूत्रम् ? - परिभाषासूत्रम्।

१३४. कौ टकितौ आद्यन्तौ भवतः ? - आगमौ।

१३५. अनुषङ्गलोपः इत्यत्र अनुषङ्गो नाम कः ? - उपधानकारः।

१३६. मिदागमः पूर्वान्तः परादिः उत अभक्तः? - पूर्वान्तः।

१३७. माषवापाणि अत्र केन णत्वम् ? - प्रातिपदिकान्तनुम्विभक्तिषु च (८-४-११)

१३८. अधिकारः कतिप्रकारकः ? - त्रिप्रकारकः।

१३९. एच इग्घ्रस्वादेशे (१-१-४८) सूत्रं कथं प्रत्याख्यातम् ? - सिद्धमेङः सस्थानत्वात्, ऐचोश्चोत्तरभूयस्त्वात् इत्याभ्याम्।

१४०. स्थाने योगः यस्याः सा स्थानेयोगा इति विग्रहे सप्तम्यलोपः कथम् ? - निपातनात्।

१४२. स्थाने अयोगा स्थानेयोगा इत्यत्र अयोगा का ? - अव्यक्तयोगा।

१४३. योगवती योगा अत्र योगवती का ? - यस्याः बहवः योगाः सा।

१४४. आर्थाः अभिसम्बन्धाः नाम के ? - स्वस्वामित्वादयः।

१४५. यौनाः अभिसम्बन्धाः के ? - पितृत्वादयः।

१४६. मौखाः अभिसम्बन्धाः नाम के ? - गुरुशिष्यभावाः।

१४७. स्रौवाः अभिसम्बन्धाः नाम के ? - ऋत्विक्त्वादयः।

१४८. परमसिद्धान्ते 'स्थानेऽन्तरतमः' (१-१-५०) सूत्रस्य किमुदाहरणम् ?

- अकः सवर्णे दीर्घः (६-१-१०१)

१४९. स्थानेऽन्तरतमसूत्रे कः पाठः निराकृतः ? - सप्तम्यन्तः।

१५०. निर्वर्तकं नाम किम् ? - विधायकम्।

१५१. पृथिवीविकारः आन्तर्यतः कुत्र गच्छति ? - पृथिवीम्।

१५२. अब्विकारः आन्तर्यतः कुत्र गच्छति ? - अपः।

१५३. ज्योतिषो विकारः ज्योतिरेव गच्छतीत्यत्र ज्योतिश्शब्दार्थः कः ? - सूर्यः।

१५४. समाजः कः ? - उत्सवेषु संघातः।

१५५. समाशः कः ? - सहभोजनम्।

१५६. समवायः कः ? - कस्याञ्चित् क्रियायां मेलनम्।

१५७. उरण् रपरः (१-१-५१) कीदृशं सूत्रम् ? - परिभाषासूत्रम्।

१५८. उरण् रपरः (१-१-५१) सूत्रे उः नाम किम् ? - ऋकारस्य।

१५९. उरण् रपरः (१-१-५१) सूत्रे अण् कः ? - प्रत्याहारः पूर्वणकारः वा।

१६०. स्थानेऽन्तरतमः (१-१-५०) सूत्रे स्थानं नाम किम् ? - प्रसङ्गः।

१६१. अभ्यस्तस्वरो नाम कः ? - उदात्तः।

१६२. पदशब्देन प्रत्ययार्थः कथम् उच्यते ? - पद्यते अनेन अर्थः इति व्युत्पत्त्या।

१६३. नार्पत्यः इति शब्दस्य कोऽर्थः ? - नृपतेः अपत्यं पुमान्।

१६४. अलोऽन्त्यस्य (१-१-५२) सूत्रे किं पक्षद्वयम् ? - अन्त्यस्यालः आदेशः,

अन्त्यस्य आदेशः अल्।

१६५. अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः इति वार्तिके अनुसंहारः

नाम कः ? - उपसंहारः।

१६६. तातङ् सर्वादेशः कथम् ? - अन्त्यादेशात् विप्रतिषेधात्।

१६७. अनेकाल् शित्सर्वस्य (१-१-५५) सूत्रे का परिभाषा साधिता ?

- नानुबन्धकृतमनेकाल्त्वम्।

१६८. 'गुरुवद् गुरुपुत्रे' इति दृष्टान्तः कस्मिन्सूत्रे ?

- स्थानिवदादेशोऽनल्विधौ (१-१-५६)

१६९. स्थानी आदेशस्य संज्ञा कदा स्यात् ? - स्थानिवत्सूत्रे वद्ग्रहणाभावे।

१७०. अल्विधिः इत्यत्र कतिधा विग्रहः ? - चतुर्धा ।

१७१. स्थानिकार्यं कुत्र अतिदिश्यते ? - आदेशे।

१७२. आदेशः स्थानिवत्स्यात् इत्यत्र किंसूत्रांशः प्रमाणम् ?

- युष्मदस्मदोरनादेशे (७-२-८६)

१७३. अल्विधौ स्थानिवद्भावो नास्तीत्यत्र किंसूत्रांशः मानम् ?

- अदो जग्धिर्ल्यप्ति किति (२-४-३६)

१७४. सामान्यातिदेशे कस्य अतिदेशो नास्ति ? - विशेषस्य।

१७५. 'कार्यविपरिणामाद्वा सिद्धम्' इति वार्तिके कार्यं नाम किम् ? - बुद्धिः।

१७६. आनुदेशिको नाम कः ? - आतिदेशिकः।

१७७. आदेशी नाम कः ? - स्थानी।

१७८. वृक्षाय इत्यत्र स्थानिवद्भावेन किं लभ्यते ? - सुप्त्वम्।

१७९. स्थानी नाम कः ? - यः भूत्वा न भवति सः।

१८०. आदेशो नाम कः ? - यः अभूत्वा भवति सः।

१८१. 'तस्य दोषस्तयादेशे उभयप्रतिषेधः' इति वार्तिके दोषो नाम कः ?

- अतिव्याप्तिः।

१८२. वधकः इत्यत्र सिद्धान्ते कः प्रत्ययः ? - क्वुन्।

१८३. अचः परस्मिन्पूर्वविधौ (१-१-५७) सूत्रे पूर्वविधौ इति कतिधा विग्रहः ?

- द्विधा।

१८४. भावाभावातिदेशौ कस्मिन् सूत्रे स्वीकृतौ ? - अचः परस्मिन्पूर्वविधौ (१-१-५७)

१८५. न पदान्तसूत्रेण किं निषिध्यते ? - स्थानिवद्भावः।

१८६. 'क्वौ लुप्तं न स्थानिवत्' इति निषेधस्य किमुदाहरणम् ? - लौः।

१८७. द्विर्वचनेऽचि (१-१-५९) सूत्रे द्विर्वचनम् इति कीदृशः निर्देशः ?

- एकशेषः।

१८८. द्विर्वचनेऽचि (१-१-५९) सूत्रे किम् अर्थद्वयं सिध्यति ?

- द्विर्वचने कर्तव्ये, द्विर्वचनेऽचि प्रत्यये।

१८९. प्रत्ययलोपे प्रत्ययलक्षणम् (१-१-६२) कीदृशं सूत्रम् ? - अतिदेशसूत्रम्।

१९०. प्रत्ययलोपे प्रत्ययलक्षणम् (१-१-६२) सूत्रे द्वितीयं प्रत्ययग्रहणं किमर्थम् ?

- वर्णलक्षणं मा भूत्।

१९१. 'वृत्तिपृथक्त्वं तु नोपपद्यते' इति वार्तिके वृत्तिः नाम का ? - कालप्रमाणम्।

१९२. तस्मिन्निति निर्दिष्टे पूर्वस्य (१-१-६६) सूत्रे निर्दिष्टग्रहणं किमर्थम् ?

- आनन्तर्यार्थम्।

१९३. तस्मिन्निति सूत्रे इतिकरणं किमर्थम् ? - अर्थनिर्देशार्थम्।

१९४. अणुदित्सवर्णस्य चाप्रत्ययः (१-१-६९) सूत्रे अप्रत्ययग्रहणेन किं ज्ञाप्यते ?

- भाव्यमानेन सवर्णानां ग्रहणं न इति परिभाषा।

१९५. अणुदित्सूत्रे अण्ग्रहणं कथं प्रत्याख्यातम् ? - आकृतिग्रहणात्।

१९६. तपरस्तत्कालस्य (१-१-७०) सूत्रे तत्पदेन किं गृह्यते ? - वर्णः।

१९७. तपरस्तत्कालस्य (१-१-७०) सूत्रे तत्कालशब्दस्य कः विग्रहः ?

- तस्य कालः तत्कालः। तत्काल इव कालः यस्य सः।

१९८. तदन्तसंज्ञासूत्रं किम् ? - येन विधिस्तदन्तस्य (१-१-७२)

१९९. तदन्तसंज्ञापवादवार्तिकं किम् ? - यस्मिन्विधिस्तदादावल्ग्रहणे (वा)

२००. वृद्धिर्यस्याचामादिस्तद्वृद्धम् (१-१-७३) सूत्रे यस्यग्रहणं किमर्थम् ?

- संज्ञिनः व्यपदेशाय।

२०१. देवदत्तीयाः इत्यादौ कथं वृद्धसंज्ञा ? - वा नामधेयस्य (वा)

२०२. एङ् प्राचां देशे (१-१-७५) सूत्रं क्व वक्तव्यम् ? - शैषिकेषु।।



# वैयाकरणभूषणसारः

## धात्वर्थनिर्णयः

१. वैयाकरणभूषणसारस्य रचयिता कः ? - कौण्डभट्टः।
२. वैयाकरणभूषणसारः कस्य ग्रन्थस्य व्याख्यानम् ? - वैयाकरणमतोन्मज्जनस्य।
३. वैयाकरणमतोन्मज्जनग्रन्थस्य रचयिता कः ? - भट्टोजीदीक्षितः।
४. शब्दकौस्तुभं कः लिखितवान् ? - भट्टोजीदीक्षितः।
५. वैयाकरणभूषणस्य कर्ता कः ? - कौण्डभट्टः।
६. शब्दकौस्तुभः कस्मात् उद्धृतः ? - महाभाष्यात्।
७. वैयाकरणभूषणसारस्थाः मूलकारिकाः कुत्र सन्ति ? - वैयाकरणमतोन्मज्जने।
८. वैयाकरणमते धात्वर्थः कः ? - फलं व्यापारश्च।
९. वैयाकरणमते धातोः क्व शक्तिः ? - फले व्यापारे च।
१०. फलव्यापारयोः वाचकः कः ? - धातुः।
११. 'आश्रये तु तिङः स्मृताः' इत्यत्र आश्रयपदार्थः कः ?

- व्यापाराश्रयः कर्ता, फलाश्रयः कर्म।

१२. फलव्यापारयोर्मध्ये किं प्रधानम् ? - व्यापारः।
१३. व्यापारः एव कुतः प्रधानम् ? - फलजनकत्वात्।
१४. वैयाकरणमते तिङर्थाः के ? - कर्ता, कर्म, संख्या, कालः।
१५. फलव्यापारयोः विशेष्यः कः भवति ? - व्यापारः।
१६. फलव्यापारयोः विशेषणं किं भवति ? - तिङर्थः।
१७. फलं किं विवक्षितम् ? - विक्लित्त्यादि।
१८. व्यापारो नाम कः ? - साध्यत्वेन अभिधीयमाना क्रिया।
१९. साध्यत्वं नाम किम् ? - क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपम्।
२०. असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते इत्यत्र पदशब्दः प्रत्ययपरः कथम् ?

- पद्यते अनेन अर्थः इति व्युत्पत्त्या।

२२. तिङ्पदाः के ? - धातवः।
२३. तिङ्पदैः इत्यत्र कः विग्रहः ? - तिङः पदानि येभ्यः ते । तैः।
२४. धातुना कीदृशः भावः अभिधीयते ? - असत्त्वभूतः।
२५. आख्याते क्रियैकत्वव्यवस्था कथं सङ्गच्छते ?

- अवच्छेदकबुद्धिविशेषैक्यमादाय।

२६. फलाश्रयः कर्म इत्यत्र किं सूत्रं प्रमाणम् ? - कर्तुरीप्सिततमं कर्म (१-४-४७)

२७. व्यापाराश्रयः कर्ता इत्यत्र किं सूत्रं प्रमाणम् ? - स्वतन्त्रः कर्ता (१-४-५४)

२८. तिङामाश्रये शक्तिश्चेत् शक्यतावच्छेदकं किम् ?

- कर्तृत्वकर्मत्वशक्तिरूपमाश्रयत्वम्।

२९. कर्तृकर्मणोः आख्यातार्थत्वे किं सूत्रं मानम् ?

- लः कर्मणि च भावे चाकर्मकेभ्यः (३-४-६९)

३०. लः कर्मणि चेति सूत्रे चकारात् किमनुकृष्यते ?

- कर्तरि कृत् (३-४-६७) सूत्रात् कर्तरि इति।

३१. बोधकतारूपा तिबादिशक्तिः कुत्र कल्प्यते ? - स्थानिनि लकारादौ।

३२. कृतौ फले च लकाराः भवन्तीति के आक्षिपन्ति ? - नैयायिकादयः।

३३. लः कर्मणीति सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वपरे इति के आक्षिपन्ति ?

- नैयायिकादयः।

३४. फलव्यापारयोः धातुलभ्यत्वेन लकारस्य पुनः कस्मिन्नर्थे शक्तिः अयुक्ता ?

- फलव्यापारार्थे।

३५. फलं धात्वर्थः, व्यापारः प्रत्ययार्थः इति कस्य मतम् ? - मण्डनमिश्रस्य।

३६. योगः कः ? - अलब्धस्य लाभः।

३७. क्षेमं नाम किम् ? - लब्धस्य परिरक्षणम्।

३८. मीमांसकमते घटमानय इत्यादौ कस्य प्राधान्यम् ? - जात्याक्षिप्तव्यक्तेः।

३९. पचतीत्यादौ भावनायाः किं विवरणम् ? - पाकं करोति।

४०. पचति देवदत्तः इत्यादौ प्रथमान्तार्थस्य केन सह अभेदान्वयः ? - तिङर्थकर्त्रा।

४१. अभेदबोधे समानविभक्तिकस्य नियामकत्वे क्व अभेदबोधानापत्तिः ?

- सोमेन यजेत, स्तोकं पचतीत्यादौ।

४२. यौगिकानां द्रव्यवाचित्वानापत्तौ किम् अधिकरणं विरुध्यते ?

- अरुणाधिकरणम्।

४३. अरुणाधिकरणम् आरुण्यस्य कुत्र अन्वयं प्रतिपादयति ? - स्ववाक्योपात्तद्रव्ये।

४४. अरुणयेत्यादि सम्पूर्णं वाक्यं किम् ?

- अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति।

४५. अरुणाधिकरणविरोधपरिहाराय पिङ्गाक्ष्यादियौगिकानां किमङ्गीकार्यम् ?

- द्रव्यवाचित्वम्।

४६. आख्यातार्थसंख्यायाः कुत्र अन्वयः ?

- कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि।

४७. कर्तृप्रत्यये कर्ता कुत्र विशेषणम् ? - व्यापारे।

४८. कर्मप्रत्यये कर्म कुत्र विशेषणम् ? - फले।

४९. नैयायिकादयः आख्यातार्थसंख्यां कुत्र अनुयन्ति ? - प्रथमान्तार्थे।

५०. कालः क्व विशेषणम् ? - व्यापारे।

५१. अप्पय्यदीक्षितः कालस्य कुत्र अन्वयं वदति ? - फले।

५२. किं प्रधानं सर्वदा?- भावना।

५३. तिङर्थः सर्वदा किं भवति ? - विशेषणम्।

५४. धात्वर्थभावनाप्राधान्ये किं यास्कवचनं प्रमाणम् ? - भावप्रधानमाख्यातम्।

५५. भूवादिसूत्रभाष्ये किं प्रधानमुक्तम् ? - क्रिया

५६. आख्यातार्थप्राधान्ये कस्य प्राधान्यं भवति ? - प्रथमान्तार्थस्य।

५७. आख्यातार्थप्राधान्ये का भाष्यसिद्धैकवाक्यता न सिध्यति ?

- पश्य मृगो धावति।

५८. भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणम् इति के वदन्ति ?

- नैयायिकाः।

५९. पचतीत्यत्र वैयाकरणमते कः बोधः ? - एकाश्रयिका पाकानुकूला भावना।

६०. पच्यते इत्यत्र कः बोधः वैयाकरणमते ?

- एकाश्रया या विक्लित्तिः तदनुकूला भावना।

६१. नैयायिकमते तिङर्थः कः ? - कृतिः।

६२. फलव्यापारयोः इत्यत्र सप्तम्यर्थः कः ? - वाचकत्वरूपविषयत्वम्।

६३. घटो नश्यति इत्यत्र कः बोधः ? - घटाभिन्नाश्रयकः नाशानुकूलो व्यापारः।

६४. देवदत्तः जानाति अत्र कः बोधः ?

- देवदत्ताभिन्नाश्रयकः ज्ञानानुकूलो वर्तमानः व्यापारः।

६५. पचतीत्यादौ कर्तृमात्रबोधे के तात्पर्यग्रहकाः ? - शप्श्नमाद्याः।

६६. पच्यते इत्यादौ कर्ममात्रबोधे के तात्पर्यग्राहकाः ? - तङ्यक्चिणादयः।

६७. 'क्रमादमुं नारद इत्यबोधि सः' इत्यत्र कस्मिन्नर्थे चिण् ? - कर्तरि।

६८. पच्यते ओदनः स्वयमेव अत्र कः बोधः ?

- एकौदनाभिन्नाश्रयकः पाकानुकूलः व्यापारः।

६९. लडाद्यन्ते भावनायाः अवाच्यत्वं के वदन्ति ? - प्राभाकरादयः।

७०. तिङन्तस्थले कृतिरेव वाच्या न व्यापारः इति के वदन्ति ? - नैयायिकाः।

७१. कृञः यत्नार्थकत्वं सिद्धमुत असिद्धम् ? - असिद्धम्।
७२. सिद्धान्ते कृञर्थः कः ? - उत्पत्तिरूपफलसहितं यत्नादि।
७३. दृश्यते घटः स्वयमेव इत्यादिप्रयोगाः कुतो न ? - दर्शनस्य घटावृत्तित्वात्।
७४. कर्मवद्भावः कुत्र इष्यते ? - निर्वर्त्ये विकार्ये च कर्मणि।
७५. कर्मवद्भावः कुत्र नेष्यते ? - प्राप्ये कर्मणि।
७६. नैयायिकमते कीदृशमुख्यः शाब्दबोधः ? - प्रथमान्तार्थमुख्यविशेष्यकः।
७७. त्यजिगम्योः कदा पर्यायतापत्तिः ? - धातूनां फलावाचकत्वे।
७८. द्व्यर्थः पचिः इति भाष्यं कदा सङ्गच्छते ? - धातोः फलव्यापारोभयवाचकत्वे।
७९. ग्रामो गमनवान् इति प्रयोगः कदा आपद्यते ? - फलमात्रस्य धात्वर्थत्वे।
८०. पचतीत्यस्य पाकं करोति इति विवरणात्मा कस्य? - धातोः।
८१. घटः कर्मत्वम्, आनयनं कृतिः इति केषां बोधः ? - नैयायिकानाम्।
८२. प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् (१-२-५६) सूत्रे अन्यप्रमाणत्वात् इत्यस्य कोऽर्थः ? - व्युत्पत्त्यनुसारित्वात्।
८३. क्रियावाचकत्वे सति भ्वादिगणपठितत्वं किम् ? - धातुत्वम्।
८४. भावनायाः तिङर्थत्वे 'भावयति घटम्' इतिवत् कः प्रयोगः स्यात् ? - भवति घटम्।
८५. अस्त्यादौ क्रिया कुतो न भासते ? - क्रियायाः फलसमानाधिकरणत्वात्।
८६. फलव्यापारयोः एकनिष्ठतायां धातुः कीदृशः भवति ? - अकर्मकः।
८७. फलव्यापारयोः धर्मिभेदे धातुः कीदृशः भवति ? - सकर्मकः।
८८. एकनिष्ठतायाम् इत्यस्य कोऽर्थः ? - भिन्नाधिकरणावृत्तितायाम्।
८९. आत्मानं जानाति इत्यादौ कौ द्वौ आत्मानौ ? - शरीरात्मा अन्तरात्मा च।
९०. आख्यातशब्दे भागाभ्याम् इत्यत्र आख्यातशब्दस्य कोऽर्थः ? - तिङन्तद्वयघटितवाक्ये।
९१. आख्यातशब्दे भागाभ्याम् इत्यत्र भागाभ्यामित्यस्य कोऽर्थः ? - तिङन्ताभ्याम्।
९२. साधनत्वं नाम किम् ? - कारकत्वेन अन्वयित्वम्।
९३. कृदभिहितः भावः कथं प्रकाशते ? - द्रव्यवत्।
९४. पाकः इत्यादिघञन्तस्थले प्राकृतिप्रत्ययाभ्यां किं गम्यते ? - प्रकृत्या साध्यावस्था प्रत्ययेन साधनावस्था च क्रिया।
९५. साध्यत्वेन प्रतीयमाना क्रिया किन्निबन्धना ? - धातुरूपनिबन्धना।
९६. क्रियायाः सिद्धभावः किन्निबन्धनः ? - घञादिनबन्धनः।

९७. स्तोकादीनां धात्वर्थान्वये का विभक्ति: ? - द्वितीया।

९८. स्तोकादे: घञार्थान्वये का विभक्ति: लिङ्गञ्च ? - प्रथमा। पुँल्लिङ्गम्।

९९. सम्बोधनान्तस्य क्व अन्वय: ? - क्रियायाम्।

१००. अभ्यावृत्ति: नाम का ? - पुन: पुन: जन्म।

१०१.प्रथमो वति: केन सूत्रेण विधीयते?- तेन तुल्यं क्रिया चेद्वति:(५-१-११५)

१०२. साधुत्वमष्टकस्यास्य कया इत्यवधार्यताम् ? - क्रियया।

१०३. असमस्तनञ् नाम कोऽर्थ: ? - समासायोग्य: प्रसज्यप्रतिषेधीय: नञ्।

१०४. क्रियाशब्द: फलपर: कदा ? - क्रियत इति कर्मव्युत्पत्तौ।

१०५. भेद्यं नाम किम् ? - विशेष्यम्।

१०६. भेदकं नाम किम् ? - विशेषणम्।

१०७. शब्दसाधुत्वपरा का ? - व्याकरणस्मृति:।

१०८. साधुत्वाभावेऽपि किं न निवार्यते ? - बोध:।

## लकारार्थनिर्णय:

१. वर्तमानेऽर्थे क: लकार: ? - लट्।

२. किं नाम वर्तमानत्वम् ? - प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वं वा।

३. आत्मा अस्ति, पर्वता: सन्तीत्यादौ कथं वर्तमानत्वम् ?
- तत्तत्कालिकानां राज्ञाम् उत्पत्त्यादिसमयमादाय।

४. प्रत्यया: द्योतका: इति पक्षे लडादि: क: भवति ? - तात्पर्यग्राहक:।

५. अन्वयव्यतिरेकाभ्यां प्रत्ययानां लडादीनां क: पक्ष: सिध्यति ? - वाचकत्वपक्ष:।

६. भूतानद्यतनपरोक्षेऽर्थे क: लकार: ? - लिट्।

७. किं नाम परोक्षत्वम् ?
- 'साक्षात्करोमि' इत्येतादृशविषयताशालिज्ञानाविषयत्वम्।

८. भाष्ये क्रिया नाम का उक्ता ?
- अत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम् इति।

९. 'व्यातेने किरणावलीमुदयन:' इति कथं प्रयोग: ? - असङ्गत एव।

१०. अनद्यतने भाविनि क: लकार: ? - लुट्।

११. श्वो भविता अत्र क: लकार: ? - लुट्।

१२. भविष्यत्सामान्ये क: लकार: ? - लृट्।

१३. किं नाम भविष्यत्त्वम् ? - वर्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम्।
१४. विध्यादौ कति लकाराः ? - ते च के ? - त्रयः। लेट्, लोट्, लिङ्।
१५. छन्दोमात्रगोचरः कः लकारः ? - लेट्।
१६. आशिषि कौ लकारौ भवतः ? - लिङ्लोटौ।
१७. अनद्यतनभूतेऽर्थे कः लकारः ? - लङ्।
१८. प्रेरणं नाम किम् ? - भृत्यादेर्निकृष्टस्य प्रवर्तनम्।
१९. भूतसामान्ये कः लकारः ? - लुङ्।
२०. किं नाम भूतत्वम् ? - विद्यमानध्वंसप्रतियोगित्वम्।
२१. घटोऽभूत् इत्यत्र कः बोधः ?
- विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयकः उत्पत्त्याद्यनुकूलः व्यापारः।
२२. भूते भाविनि हेतुहेतुमद्भावे सति कः लकारः ? - लृङ्।
२३. वह्निश्चेत् प्राज्वलिष्यत् ओदनमपक्ष्यत् इत्यत्र कः शाब्दबोधः ?
- वह्न्यभिन्नाश्रयकप्रज्वलनानुकूलव्यापाराभावप्रयोज्यः ओदनाभिन्नाश्रयकविक्लित्त्यनुकूलव्यापाराभावः इति।
२४. मीमांसकैः पञ्चमो लकारः कः व्यवह्रियते ? - लेट्।

## सुबर्थनिर्णयः

१. द्वितीयातृतीयासप्तमीनां कोऽर्थः?- आश्रयः।
२. क्रियाजन्यफलाश्रयः कः ? - कर्म।
३. आश्रयत्वं किं रूपमवच्छेदकम् ? - अखण्डशक्तिरूपम्।
४. चैत्रश्चैत्रं गच्छति इति प्रयोगवारणं कथम् ? - परया कर्तृसंज्ञया कर्मसंज्ञाबाधात्।
५. नैयायिकमते चैत्रस्तण्डुलं पचतीत्यत्र कः शाब्दबोधः ?
- तण्डुलसमवेतावच्छेदकविक्लित्त्यनुकूलतण्डुलान्यसमवेत-क्रियाजनककृतिमांश्चैत्रः।
६. कर्म कतिविधम् ? - सप्तविधम्।
७. ईप्सितं कर्म कतिविधम् ? - त्रिविधम्।
८. विकार्यं कर्म कतिविधम् ? - द्विविधम्।
९. कर्तृतृतीयायाः कः अर्थः ? - आश्रयः।
१०. स्थाली पचति इत्यादि कथं सङ्गच्छते ? - यदा यदीयव्यापारः धातुना

अभिधीयते तदा सः कर्ता इति स्वीकारात्।

११. कर्ता कतिविधः ? - त्रिविधः।

१२. त्रयः कर्तारः के ? - शुद्धः, प्रयोजको हेतुः, कर्मकर्ता।

१३. मया हरिः सेव्यते अस्य कः बोधः ?

- मदभिन्नाश्रयकः हरिकर्मकसेवनानुकूलः व्यापारः।

१४. हरिणा कार्यते अत्र कः बोधः ? - हर्यभिन्नाश्रयकः उत्पादनानुकूलः व्यापारः।

१५. गमयति कृष्णं गोकुलम् अत्र कः बोधः ?

- गोकुलकर्मकगमनानुकूलकृष्णाश्रयकतादृशव्यापारानुकूलः व्यापारः।

१६. साधकतमं करणम् (१-४-४९) सूत्रे तमबर्थः कः ? - प्रकर्षः।

१७. सप्तम्याः कः अर्थः ? - आश्रयः।

१८. फलनिरूपिताधारः कस्याः विभक्तेः अर्थः ? - द्वितीयायाः।

१९. कर्तृकर्मव्यापारफलनिरूपितः कस्याः विभक्तेः अर्थः ? - सप्तम्याः।

२०. अधिकरणं कतिविधम् ? - त्रिविधम्।

२१. त्रीणि अधिकरणानि कानि ? - औपश्लेषिकम्, वैषयिकम्, अभिव्यापकम्।

२२. पचम्यर्थः कः ? - अवधिः

२३. अपायः कः ? - विश्लेषः

२४. उदासीनं नाम किम् ? - अनाश्रयः।

२५. अपादानं कतिविधम् ? - त्रिविधम्।

२६. त्रीणि अपादानानि कानि ? - निर्दिष्टविषयम्, उपात्तविषयम्, अपेक्षितक्रियम्।

२७. निर्दिष्टविषयमपादानं नाम किम् ? - यत्र साक्षाद्धातुना गतिः निर्दिश्यते तत्।

२८. उपात्तविषयमपादानं नाम किम् ? - यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तत्।

२९. अपेक्षितमपादानं नाम किम् ? - यत्र अपेक्षिता क्रिया तत्।

३०. चतुर्थ्यर्थः कः? - उद्देश्यः।

३१. मीमांसकैः उद्देश्यमेव किमुक्तम् ? - शेषित्वम्।

३२. सम्यक् प्रदीयतेऽस्मै सम्प्रदानमिति अन्वर्थसंज्ञां के आहुः? - वृत्तिकाराः।

३३. रजकस्य वस्त्रमित्येव केषां मते ? - वृत्तिकाराणाम्।

३४. सम्प्रदानं कतिविधम् ? - त्रिविधम्।

३५. त्रीणि सम्प्रदानानि कानि ? - अनिराकर्तृ, प्रेरयितृ, अनुमन्तृ।

३६. शक्तिः कारकम् इति पक्षः भाष्ये कस्मिन् सूत्रे दृश्यते ?

- सप्तमीपञ्चम्यौ कारकमध्ये (२-३-७)

३७. देवदत्तस्य गौः ब्राह्मणाय गेहाद् गङ्गायां हस्तेन मया दीयते अस्य कः बोधः ?
- देवदत्तसम्बन्धिनी या गौः तदभिन्नाश्रयकत्यागानुकूलः ब्राह्मणोद्देश्यकः गेहनिष्ठविभागजनकः गङ्गाधिकरणकः हस्तकरणकः मन्निष्ठः व्यापारः।

३८. घटं जानाति इत्यादौ द्वितीयायाः विषयतायां लक्षणेति के वदन्ति ?
- नैयायिकाः।

३९. कर्मणि द्वितीया (२-३-२) इत्यादौ कौ नियमौ द्वौ ?
- शब्दनियमः, अर्थनियमः।

४०. शब्दनियमः कः ? - द्वितीया कर्मण्येव इत्यादि।

४१. अर्थनियमः कः ? - कर्मणि द्वितीयैव।

४२. सुपां केऽर्थाः ? - कर्मादयः।

## नामार्थनिर्णयः

१. नामार्थाः कति ? - पञ्च।

२. नामार्थाः के ? - जातिः, द्रव्यम्, लिङ्गम्, संख्या, कारकम्।

३. एकं नामार्थः इति पक्षे एकपदार्थः कः ? - जातिः व्यक्तिर्वा।

४. द्विकं नामार्थः इति पक्षे द्विकं नाम किम् ? - जातिव्यक्ती।

५. त्रिकं नामार्थः इत्यत्र त्रिकशब्दार्थः कः ? - जातिव्यक्तिलिङ्गानि।

६. चतुष्कं नामार्थः इति पक्षे चतुष्कं नाम किम् ? - जातिव्यक्तिलिङ्गसंख्याः।

७. पञ्चकं नामार्थः इति पक्षे पञ्चकपदार्थः कः? - जातिव्यक्तिलिङ्गसंख्याकारकाणि।

८. किं नाम नपुंसकत्वम् ? - सत्त्वरजस्तमोगुणानां साम्यावस्था।

९. किं नाम पुंस्त्वम् ? - सत्त्वरजस्तमोगुणानाम् आधिक्यम्।

१०. किं नाम स्त्रीत्वम् ? - सत्त्वरजस्तमोगुणानाम् अपचयः।

११. 'दधि पश्य' इत्याद्यनुसारं कः नामार्थः सिध्यति ? - पञ्चकं नामार्थः।

१२. 'विष्णुमुच्चारय' इत्यादौ कः प्रातिपदिकार्थः ? - शब्दोऽपि।

१३. षोढा प्रातिपदिकार्थः इति पक्षे षष्ठः कः ? - शब्दः।

१४. तेजसः द्वे शक्ती के ? - ग्राह्यत्वं ग्राहकत्वञ्च।

१५. विषयत्वमनादृत्य शब्दैः किं न प्रकाश्यते ? - अर्थः।

१६. भू सत्तायाम् इत्यादौ अनुकार्यानुकरणयोः कस्मिन् पक्षे न प्रातिपदिकत्वम्, नापि पदत्वम् ?
- अभेदपक्षे।

## समासशक्तिनिर्णयः

१. बुधैः कतिविधः समासः प्रकीर्तितः ? - षड्विधः।

२. षट् समासाः के ? - सुपां सुपा, सुपां तिङा, सुपां नाम्ना, सुपां धातुना, तिङां तिङा, तिङां सुबन्तेन इति।

३. षड्विधः समासः कस्मिन् सूत्रे भाष्ये व्युत्पादितः ? - सह सुपा (२-१-४)

४. प्राचीनवैयाकरणैः (प्रायेण) कति समासाः उक्ताः ? - चत्वारः।

५. प्रायेण चत्वारः समासाः के ? - अव्ययीभावः, तत्पुरुषः, द्वन्द्वः, बहुव्रीहिः।

६. अव्ययीभावः कः ? - पूर्वपदार्थप्रधानः।

७. उत्तरपदार्थप्रधानः कः ? - तत्पुरुषः।

८. द्वन्द्वः कः ? - उभयपदार्थप्रधानः।

९. अन्यपदार्थप्रधानः कः ? - बहुव्रीहिः।

१०. उन्मत्तगङ्गम् इति अव्ययीभावदर्शनात् कः अतिव्याप्तः ? - बहुव्रीहिः।

११. सिद्धान्ते किं नाम अव्ययीभावत्वम् ? - अव्ययीभावाधिकारपठितत्वम्।

१२. समर्थसूत्रभाष्ये जहत्स्वार्थाजहत्स्वार्थपक्षयोः कुत्र पर्यवसानमुक्तम् ? - एकार्थीभावव्यपेक्षारूपयोः।

१३. का जहत्स्वार्था ? - जहति पदानि स्वार्थं यस्यां सा।

१४. का अजहत्स्वार्था ? - न जहति पदानि स्वार्थं यस्यां सा।

१५. भेदः नाम कः ? - अन्योन्याभावः।

१६. वृत्तिद्वयस्य के त्रयः भेदाः ? - भेदः, संसर्गः, भेदसंसर्गौ।

१७. भेदपक्षे राजपुरुषः इत्यस्य कः बोधः ? - अराजकीयभिन्नः पुरुषः।

१८. संसर्गपक्षे राजपुरुषः इत्यस्य कः बोधः ? - राजसम्बन्धवान् पुरुषः।

१९. भेदसंसर्गपक्षे राजपुरुषः इत्यस्य कः बोधः ? - अराजकीयभिन्नः राजसम्बन्धवान् च अयम् पुरुषः।

२०. समासे शक्तिः कथं भिन्ना ? - पङ्कजशब्दवत्।

२१. वृत्तिधर्माः के ? - विशेषणलिङ्गसंख्याद्ययोगादयः।

२२. नामार्थधात्वर्थयोः कः अव्युत्पन्नः ? - साक्षाद् भेदेन अन्वयः।

२३. समानाधिकरणनामार्थयोः का व्युत्पत्तिः ? - अभेदान्वयव्युत्पत्तिः।

२४. प्रकृतिप्रत्ययार्थयोः कस्य प्राधान्यम् ? - प्रत्ययार्थस्य।

२५. चित्रगुरित्यदौ चित्रगवीनां स्वाम्यादिप्रतीतिः किं विना नोपपद्यते ?

- समुदायशक्तिम्।

२६. प्रत्ययानां का व्युत्पत्तिः ? - सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिः।
२७. व्यपेक्षावादिनः के ? - नैयायिकमीमांसकादयः।
२८. समासे शक्त्यस्वीकारे तस्य किं न स्यात् ? - प्रातिपदिकसंज्ञा।
२९. तिप्प्रत्याहारः कथं कृतः? - तिप्तस्झीत्यारभ्य ङ्योस्सुप्पर्यन्तम्।
३०. पूर्वपक्षिणा प्रकृत्यर्थत्वं नाम किमुक्तम् ?

- प्रत्ययप्राग्वर्तिपदजन्योपस्थितिविशेष्यत्वम्।

३१. राजपुरुषः इत्यादौ सम्बन्धिनि लक्षणायां कः दोषः ?

- राज्ञः पुरुषः इति विवरणविरोधः।

३२. राजपुरुष इत्यादौ सम्बन्धे लक्षणायां कः दोषः ?

- राजसम्बन्धरूपः पुरुषः इति बोधप्रसङ्गः।

३३. आक्षिकः इत्यत्र कः बोधः? - अक्षकरणकव्यापाराश्रयः।
३४. कुम्भकार इत्यस्य कः बोध ? - कुम्भोत्पत्त्यनुकूलव्यापाराश्रयः।
३५. अक्षैः दीव्यति अस्य कः बोधः ? - अक्षकरणिका देवनानुकूला भावना।
३६. कुम्भं करोति इत्यत्र कः बोधः ? - कुम्भोत्पत्त्यनुकूला भावना।

## शक्तिनिर्णयः

१. इन्द्रियाणां स्वविषयेषु का योग्यता ? - अनादिः सम्बन्धः।
२. शब्दार्थयोः अनादिः सम्बन्धः एव का ? - शक्तिः (योग्यता)
३. कैश्चित् वाचकः कः इष्यते ? - साधुशब्दानुमानेनासाधुः।
४. अव्यक्तविदां क्व निर्णयः भवति ? - व्यक्ते।
५. साधौ प्रयोक्तव्ये किं प्रयुज्यते ? - अपभ्रंशः।
६. ईश्वरेच्छा शक्तिः इति के वदन्ति ? - नैयायिकाः।
७. शक्तत्वमेव साधुत्वमिति के वदन्ति ? - नैयायिकमीमांसकादयः।
८. शब्दानित्यदर्शिनः के ? - नैयायिकादयः।
९. साधुत्वं नाम किम् ? - पुण्यजननयोग्यत्वम्।
१०. असाधुत्वं नाम किंम् ? - पापजननयोग्यत्वम्।
११. सम्बन्धिशब्दे सम्बन्धो... इति श्लोके 'समयात्' इत्यस्य कोऽर्थः?

- व्यवहारात्।

१२. सम्बन्धिशब्दे सम्बन्धो - इति श्लोके 'योग्यतासंवित्' अस्य कोऽर्थः?

- शक्तिग्रहः।

## नञर्थनिर्णयः

१. असर्वः इति नञ्समासे सर्वनामता कथम् ? - उत्तरपदार्थस्य प्राधान्यात्।

२. असर्वः इत्यस्य कोऽर्थः ? - अरोपितः सर्वः।

३. आरोपितत्वं नाम कः अर्थः ? - आरोपितविषयत्वम्।

४. निवृत्तपदार्थकः इत्यस्य कोऽर्थः ? - अभावपदार्थकः।

५. नञर्थाः कति ? - षट्।

६. नञर्थाः के ? - तत्सादृश्यम्, अभावः, तदन्यत्वम्, तदल्पता, अप्राशस्त्यम्, विरोधः।

७. अत्वं भवसि इत्यस्य कः शाब्दबोधः ? - त्वद्भिन्नाभिन्नाश्रयिका भवनक्रिया।

८. घटो नास्ति अस्य कः बोधः ? - घटाभिन्नाश्रयकास्तित्वाभावः।

## निपातार्थनिर्णयः

१. प्रादयः द्योतकाः, चादयः वाचकाः इति के वदन्ति ? - नैयायिकाः।

२. प्रादयः चादयश्च द्योतकाः इति के वदन्ति ? - वैयाकरणाः।

३. समानाधिकरणप्रातिपदिकार्थयोः कथमन्वयः ? - अभेदेन।

४. नञ्समासादौ उत्तरपदार्थप्रधानता कथम् ? - द्योत्यार्थमादायैव।

५. निपातानां द्योतकत्वे कथं प्रातिपदिकत्वम् ? - द्योत्यार्थमादायैव।

६. वस्तुतः अव्ययादाप्सुपः (२-४-८२) इति ज्ञापकात् किं सिध्यति ? - निपातादिभ्यः सुबुत्पत्तिः।

७. उपसर्गेण धात्वर्थो बलादिति श्लोके उपसर्गपदेन किं लक्ष्यते ? - निपातः।

८. प्रादिचाद्योः विषये नैयायिकोक्तं किम् अयुक्तम् ? - वैषम्यम्।

## स्फोटनिर्णयः

१. अतिनिष्कर्षे कः स्फोटः तिष्ठति ? - वाक्यस्फोटः।

२. कति स्फोटाः ? - अष्टौ।

३. के स्फोटाः ? - वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटः।

४. शक्तिग्राहकेषु मुख्यः कः ? - व्यवहारः।

५. भू ल् इत्यतोऽपि बोधापत्तिः कदा ? - लकारस्य बोधकत्वे।

६. आदेशाः वाचकाः चेत् किं सिद्ध्यति? - पदस्फोटः।

७. समभिव्याहृतवर्णानां वाचकत्वे सिद्धे किं सिद्ध्यति?

- वर्णसमभिव्याहाररूपपदस्य वाचकता।

८. धनम् वनम् इत्यादौ नलोपाद्यापत्तिः कदा ? - प्रत्येकं वर्णानामर्थवत्त्वे।

९. वः नः इत्यादौ प्रकृतिप्रत्ययविभागासम्भवात् किं सिद्ध्यति ? - पदस्फोटः।

१०. हरेऽव, विष्णोऽव इत्यादौ सन्ध्यनन्तरं पदविभागाज्ञानात् किं सिद्ध्यति ?

- वाक्यस्फोटः।

११. लक्ष्यते = तर्क्यते अनेन इति किं रूपम् ? - लक्षणम्।

१२. अखण्डवाक्यस्फोटः केन श्लोकेन उक्तः ? -

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।

वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥

१३. वाक्यात् केषां विवेको नास्ति ? - पदानाम् ।

१४. तदेवेदं पदम्, तदेवेदं वाक्यम् इत्यनेन किं सिद्ध्यति ? - अखण्डस्फोटः ।

१५. अव्यवहितोत्तरत्वं नाम किम् ? - स्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वम्।

१६. पदस्याखण्डत्वे शास्त्रस्याप्रमाण्यं कुतो न ?

- वास्तवस्फोटव्युत्पादनाय शास्त्रस्य कल्पितोपायत्वात्।

१७. अलीकया प्रकृतिप्रत्ययकल्पनया वास्तवस्फोटबोधः कथम्? - रेखागवयन्यायेन।

१८. उच्चरितत्वं नाम किम् ? - ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम्।

१९. व्यक्तिस्फोटाः के ? - वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः।

२१. ध्वनिं प्रति कः समवायसम्बन्धेन प्रतिबन्धकः?- वायुसंयोगः।

२२. ध्वन्युत्पत्तिं प्रति अवच्छेदकतासम्बन्धेन का सामग्री प्रतिबन्धिका ?

- वर्णाभिव्यिञ्जिका।

२३. उत्पत्तिः का ? - प्रागसत्त्वे सत्त्वरूपा।

२४. वस्तुतः विप्रतिपत्तित्वं नाम किम् ? - संशयजनकवाक्यत्वमेव।

२५. स्फोटः शब्दः कया व्युत्पत्त्या ? - स्फुटति अर्थः अस्मादिति वाचकः।

२६. स्फोटः अर्थः कया व्युत्पत्त्या ? - स्फुट्यतेऽसौ इति वाच्यः।



# परिभाषेन्दुशेखरः

## शास्त्रसम्पादकप्रकरणम्।

१. परिभाषेन्दुशेखरस्य रचयिता कः ? - नागेशभट्टः।

२. परिभाषेन्दुशेखरः कतिभागेषु विभक्तः ? - त्रिषु।

३. परिभाषेन्दुशेखरे किं प्रकरणत्रयम् ?

- शास्त्रसम्पादकम्, बाधबीजम्, शास्त्रशेषः।

४. माहेश्वरसूत्रे णकारद्वयस्य उपादानेन क्व सन्देहः ? - अणिण्ग्रहणेषु।

५. लणइउण्सूत्रयोः णकारद्वयेन का परिभाषा ज्ञाप्यते ?

- व्याख्यानतो विशेषप्रतिपत्तिः न हि सन्देहादलक्षणम्।

६. प्रतिपत्तिः का ? - निश्चयः।

७. इण् प्रत्याहारः केन णकारेण ? - परेण।

८. यथोद्देशं नाम किम् ? - उद्देशमनतिक्रम्य।

९. उद्देशः नाम कः ? - उपदेशदेशः।

१०. व्याकरणशास्त्रे देशः कः विवक्षितः ? - उच्चारणकालः।

११. कैयटमते कानुद्दिश्य यथोद्देशपक्षः प्रवर्तते ? - 'भविष्यति किञ्चिदनेन प्रयोजनम्' इति ज्ञानमात्रेण सन्तुष्यद्यथाश्रुतग्राहिप्रतिपत्रपेक्षः अयम्।

१२. कस्मिन् पक्षे परिभाषाणाम् उपस्थितिः त्रिपाद्याम् ? - कार्यकालपक्षे।

१३. प्रदीपदृष्टान्तः कैयटसिद्धान्तरीत्या कस्मिन् पक्षे प्रवर्तते ?

- यथोद्देशपक्षे परिभाषाविषये।

१४. नागेशमतानुसारं प्रदीपदृष्टान्तः कुत्र प्रवर्तते ?

- पक्षद्वयसाधारण्येन परिभाषाविषये।

१५. अधिकारशब्देन पारार्थ्यात् किं स्वीक्रियते ? - परिभाषा।

१६. निषेधवाक्यानां कथं व्यवहारः ? - विध्यैकवाक्यतया एवान्वय इति परिभाषात्वेन।

१७. आकडाराधिकारस्थभपदसंज्ञानां विषये कः पक्षः ? - यथोद्देशपक्षः।

१८. संज्ञाशास्त्रस्य कस्मिन् पक्षे पृथग्वाक्यार्थबोधो नास्ति ? - कार्यकालपक्षे।

१९. कार्यकालम् इत्यस्य कोऽर्थः ? - कार्य्येण काल्यते स्वसन्निधिं प्राप्यते।

२०. अनुबन्धाः अस्य का व्युत्पत्तिः? - अनुबध्यन्ते परस्मिन् सम्बध्यन्ते इति।

२१. अनुबन्धः नाम कः ? - इत्संज्ञकवर्णः।

२२. अनेकान्ताः अस्य कोऽर्थः ? - अनवयवाः।

२३. अनेकान्तपक्षे शित्किदित्यादौ कथं समासः ? - समीपे अवयवत्वारोपेण।

२४. अनेकान्तपक्षे हलन्त्यम् (१-३-३) सूत्रे अन्त्यशब्दः कः ?

- परसमीपबोधकः।

२५. एकान्तानेकान्तयोः कः सिद्धान्तः ? - एकान्तः।

२६. एकान्तपक्षे अनेकाल्सूत्रे किं व्यर्थं स्यात् ? - शिद्ग्रहणम्।

२७. अनेकाल्शित् सर्वस्य (१-१-५५) सूत्रे शिद्ग्रहणेन का परिभाषा ज्ञाप्यते ?

- नानुबन्धकृतमनेकाल्त्वम्।

२८. नानुबन्धकृतमनेजन्तत्वम् इति परिभाषायाः ज्ञापकः कः ?

- उदीचां माङो व्यतीहारे (३-४-१९) सूत्रे माङ इति निर्देशः।

२९. ददातिदधात्योर्विभाषा (३-१-१३९) सूत्रे शस्य विकल्पविधानेन का परिभाषा ज्ञाप्यते? - नानुबन्धकृतमसारूप्यम्।

३०. नानुबन्धकृतमसारूप्यम् इति परिभाषया गोदः इत्यादौ कः प्रत्ययः न?- अण्।

३१. कृत्रिमाकृत्रिमन्यायेन संख्याग्रहणे केषां ग्रहणं स्यात् ? - बह्वादीनामेव।

३२. उभयगतिरिह भवति परिभाषायाः ज्ञापकः कः ? - संख्याया अतिशदन्तायाः कन् (५-१-२२) सूत्रे अतिशदन्ताया इति निषेधः।

३३. उभयगतिरिह भवति इत्यत्र इहशब्दार्थः कः ? - शास्त्रे।

३४. क्वोभयगतिः, क्वाकृत्रिमस्य, क्व कृत्रिमस्य इत्यत्र किं शरणम् ?

- लक्ष्यानुसारि व्याख्यानमेव।

३५. सर्वे सर्वार्थवाचकाः इति केषां दृष्ट्या ? - योगिनाम्।

३६. कार्यमनुभवन्निति परिभाषायाः ज्ञापकः कः ?

- स्थण्डिलाच्छयितरि व्रते (४-२-१५) सूत्रे शयितरि इति निर्देशः।

३७. कार्यमनुभवन्नित्यादिपरिभाषायां कार्यमनुभवन्निति किमर्थम् ?

- ऊर्णुनविषतीत्यादिसिद्धये।

३८.कार्यमनुभवन्निति परिभाषायां हिशब्दः किं बोधयति ?

- कार्यी निमित्ततया नाश्रीयते इति लोकसिद्धमर्थम्।

३९. यदागमपरिभाषायां 'तद्गुणीभूताः' इत्यस्य कोऽर्थः ?

- शास्त्रेण तदवयवत्वेन बोधिताः।

४०. यदागमपरिभाषायाः किं बीजकथनम् ? - तद्गुणीभूताः इत्यंशः।

४१. यदागमपरिभाषायाः अनित्यत्वे किं मानम् ?

- आने मुक् (७-२-८२) इति मुग्विधानम्।

४२. वर्णस्य वर्णान्तरमवयवः भवतीति केन उक्तम् ?

- आद्यन्तौ टकितौ (१-१-४६) इत्यादिना।

४३. अनागमकानां सागमकाः आदेशाः इत्यस्य कः अर्थः ?

- इड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्या।

४४. षष्ठी स्थानेयोगा (१-१-४९) इति सूत्रावर्तनेन का परिभाषा सिध्यति?

- निर्दिश्यमानस्यादेशा भवन्ति।

४५. न भूसुधियोः (६-४-८५) इति निषेधेन किं बोध्यते ?

- ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानत्वमस्ति।

४६. निर्दिश्यमानन्यायः अकज्विषये प्रवर्तते उत न ? - न।

४७. निर्दिश्यमानपरिभाषा अवयवषष्ठीविषये प्रवर्तते उत न ? - न।

४८. यत्रानेकविधमान्तर्यमित्यादिपरिभाषायाम् अनेकविधं नाम किम् ?

- स्थानार्थगुणप्रमाणकृतम्।

४९. यत्रानेकविधमिति परिभाषायां किं ज्ञापकम् ?

- स्थानेऽन्तरतमसूत्रे स्थानेग्रहणम्।

५०. अनेकविधान्तर्यसत्तायां किं गमकम् ? - स्थानेन्तरतमसूत्रे तमब्ग्रहणमेव।

५१. स्थानत इत्यस्य कोऽर्थः ? - स्थानेन।

५२. कस्य आदेशता ? - स्थान्यर्थाभिधानसमर्थस्य।

५३. प्रोढवान् इत्यत्र वृद्धिवारणे का परिभाषा उक्ता? - अर्थवद्ग्रहणे नानर्थकस्य।

५४. अर्थवद्ग्रहणपरिभाषा कुत्र न प्रवर्तते ? - वर्णग्रहणेषु।

५५. अर्थविशिष्टः शब्दः संज्ञी इत्यनेन का परिभाषा सिद्धा?

- अर्थवद्ग्रहणे नानर्थकस्य।

५६. गौणमुख्ययोः कुत्र कार्यसम्प्रत्ययः ? - मुख्ये।

५७. गुणादागतः कः ? - गौणः।

५८. गौणशब्दार्थः कः ? - आरोपितगुणनिमित्तः अप्रसिद्धसंज्ञादिः च।

५९. मुखमिव प्रधानत्वात् मुख्यः कः ? - प्रथमः।

६०. गौणमुख्यन्यायः कुत्र न प्रवर्तते ? - प्रातिपदिककार्ये।

६१. गौणमुख्यन्यायः कीदृशपदकार्ये प्रवर्तते ? - उपात्तविशिष्यार्थोपस्थापक-विशिष्टरूपपदकार्ये एव।

६२. प्रातिपदिकं विशिष्यार्थोपस्थापकं भवति उत न ? - न ।

६३. क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां कस्याः विभक्तेः साधुत्वमुक्तम् ?

- द्वितीयायाः।

६४. 'अभिव्यक्तपदार्था ये' इति श्लोकः किंविषयकः ? - पदकार्यविषयकः।

६५. अर्थवद्ग्रहणपरिभाषायाः अपवादपरिभाषा का ?

- अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति।

६६. एकयोगनिर्दिष्टानामिति परिभाषायां वाशब्दार्थः कः ? - एव।

६७. एकयोगनिर्दिष्टपरिभाषायाः कोऽर्थः ?

- परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती।

६८. क्वचिदेकदेशपरिभाषा कथं लभ्यते ? - तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलात्।

६९. 'भाव्यमानेन सवर्णानाम्' इति परिभाषायां भाव्यमानेन नाम कोऽर्थः ?

- विधीयमानेन।

७०. ज्यादादीयसः (६-४-१६०) सूत्रे दीर्घोच्चारणेन का परिभाषा ज्ञाप्यते ?

- भाव्यमानेन सवर्णानां ग्रहणं न।

७१. भाव्यमानपरिभाषां नव्याः कथं पठन्ति ?

- भाव्यमानोऽण् सवर्णान् न गृह्णाति।

७२. दिव उत् (६-१-१३१) सूत्रे तपरकरणेन का परिभाषा ज्ञाप्यते ?

- भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति।

७३. वर्णाश्रये किं नास्ति ? - प्रत्ययलक्षणम्।

७४. वर्णाश्रये इत्यस्य कः विग्रहः ? - वर्णः आश्रयः (निमित्तम्) यस्यः सः। तस्मिन्।

७५. वर्णाश्रयपरिभाषा क्व प्रवर्तते ? - वर्णप्राधान्यविषये।

७६. वर्णप्राधान्यं कीदृशं विवक्षितम् ? - वर्णस्येतराविशेषणत्वरूपं

प्रत्ययनिरूपितविशेष्यतरूपञ्च।

७८. अतः कृकमि (८-३-४६) सूत्रे कंसग्रहणेन का परिभाषा ज्ञाप्यते ?

- उणादयोऽव्युत्पन्नानि प्रातिपदिकानि।

७९. उणादीनां व्युत्पत्तिपक्षः कस्य मतानुसारम् ? - शाकटायनस्य।

८०. प्रत्ययग्रहणपरिभाषायां तदन्तांशः कथं सिध्यति ?

- येन विधिस्तदन्तस्य (१-१-७२) इत्यनेन।

८१. प्रत्ययग्रहणपरिभाषा कुत्र प्रवर्तते ? - प्रत्ययमात्रग्रहणे।

८२. हृदयस्य हृल्लेखयदण्लासेषु (६-३-५०) सूत्रे लेखग्रहणेन का परिभाषा ज्ञाप्यते ?

- उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्।

८३. यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येन आह तत्र कया परिभाषया तदादिनियमः न ?
- स्त्रीप्रत्यये चानुपसर्जने न।

८४. स्त्रीप्रत्यये चेति परिभाषायां कीदृशी सप्तमी ? - विषयसप्तमी।

८५. स्त्रीप्रत्यये चेति परिभाषा कीदृशी ? - वाचनिकी।

८६. तरप्तमपौ घः (१-१-२२) सूत्रेण तरबन्तादेः संज्ञा कथं वार्यते ?
- संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति।

८७. संज्ञाविधौ प्रत्ययग्रहणपरिभाषा कथं ज्ञाप्यते ?
- सुप्तिङन्तं पदम् (१-४-१४) सूत्रे अन्तग्रहणेन।

८८. गतिरनन्तरः (६-२-४९) सूत्रे अनन्तरग्रहणेन का परिभाषा ज्ञाप्यते ?
- कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्।

८९. कृद्ग्रहणपरिभाषा कुत्र प्रवर्तते ? - कृत्सामान्यग्रहणे कृद्विशेषग्रहणे च।

९०. कृद्ग्रहणपरिभाषा कुत्र न प्रवर्तते ? - कृदकृद्ग्रहणे।

९१. पदाङ्गाधिकारे तस्य च तदन्तस्य च परिभाषा कस्य विवरणात्मिका ?
- येन विधिस्तदन्तस्य (१-१-७२) सूत्रस्य।

९२. व्यपदेशिवत् इति शब्दस्य कोऽर्थः ? - व्यपदेशः विशिष्टः मुख्यः व्यवहारः
अस्य अस्तीति व्यपदेशी, तत्र इव।

९३. एकस्मिन् इत्यस्य कोऽर्थः ? - असहाये।

९४. एकस्मिन् इत्युक्तेः किं प्रयोजनम् ? - सभासन्नयने आकारस्य न आदित्वम्।

९५. व्यपदेशिवदेकस्मिन् परिभाषा कीदृशी ? - लोकन्यायसिद्धा।

९६. व्यपदेशिवत्परिभाषया कस्य अपि अतिदेशः ? - अशास्त्रीयस्य।

९७. 'एकपदा ऋक्' इत्यत्र भाष्ये किम् उक्तम् ? - अर्थेन युक्तः व्यपदेशः।

९८. अर्थवता व्यपदेशिवद्भावः इत्यत्र अर्थवत्पदेन किमुपलक्ष्यते ?
- असहायत्वम्।

९९. परमगर्गादिभ्यः यञ् कया परिभाषया वारितः ? - ग्रहणवता प्रातिपदिकेन
तदन्तविधिर्नास्ति इति।

१००. ग्रहणवतेति परिभाषा कस्य अनुवादः ? - समासप्रत्ययविधौ प्रतिषेधः
इति वार्तिकस्थप्रत्ययांशस्य।

१०१. सपूर्वाच्च (५-२-८७) सूत्रेण का परिभाषा ज्ञाप्यते ? - ग्रहणवतेति परिभाषा।

१०२. पूर्वात्सपूर्वादिनिः इति एकसूत्रे कर्तव्ये पृथक्सूत्रकरणं कस्याः परिभाषायाः
ज्ञापकम् ? - व्यपदेशिवद्भावोऽप्रातिपदिकेन इति।

१०३. व्यपदेशिवद्भावेति परिभाषा कुत्र न प्रवर्तते ? - प्रातिपदिकाऽप्रातिपदिकग्रहणे।

१०४.यस्मिन्विधिस्तदादावल्ग्रहणे इति कस्य अपवादः ? - तदन्तविधेः।

१०५. यस्मिन्विधिपरिभाषा कीदृशी ? - वाचनिकी।

१०६. यस्मिन्विधिपरिभाषायाः प्रवृत्तौ किं निमित्तम् ? - स्वरूपसती सप्तमी।

१०७. घटपटं, घटपटौ इत्यादिसिद्धये का परिभाषा उक्ता ?

- सर्वो द्वन्द्वो विभाषयैकवद्भवति।

१०८. सर्वो द्वन्द्वेति परिभाषा कथं ज्ञाप्यते ? - तिष्यपुनर्वस्वोः (१-२-६३) सूत्रे बहुवचनस्य इति ग्रहणेन।

१०९. 'आपोमयः प्राणः' इति श्रुत्यनुसारं प्राणी कः ?

- अद्भिः विना ग्लायमानप्राणानेव प्राणी इति।

११०. प्रकृतिवदनुकरणं भवति परिभाषायाः ज्ञापकः कः ? - क्षियः इति इयङ्निर्देशः।

१११. रामौ इत्यादौ पदत्वं कथं साध्यते ? - एकदेशविकृतमनन्यवत्।

११२. एकदेशविकृतमनन्यवत् इत्यत्र अनन्यवत् नाम किम् ? - अन्यवत् न।

११३. एकदेशविकृतपरिभाषा कीदृशी ? - लोकन्यायसिद्धा।

११४. आर्थसमाजग्रस्तं नाम किम् ?- अर्थानाम् अयम् आर्थः, समाजः = समुदायः, आर्थश्चासौ समाजः आर्थसमाजः, तेन ग्रस्तम्।

११५. एकदेशविकृतपरिभाषायाः शास्त्रे आश्रयणे किं ज्ञापकम् ?

-प्राग्दीव्यतोऽण् (४-१-८९) सूत्रे दीव्यच्छब्दानुकरणम्।

११६. एकदेशविकृतपरिभाषा कुत्र न प्रवर्तते ? - परिच्छिन्नपरिमाणेषु।

११७. एकदेशविकृतपरिभाषा केन लोकन्यायेन सिद्धा ?

- छिन्नपुच्छे शुनि श्वत्वव्यवहाररूपेण।

११८. अक्तपरिमाणं नाम किम् ? - परिच्छिन्नपरिमाणम्।

११९.विकृतावयवनिबन्धनकार्ये अक्तपरिमाणे च का परिभाषा न प्रवर्तते ?

- एकदेशविकृतमनन्यवत्।

१२०. रामौ इत्यादौ कस्मिन् पक्षे पदत्वाशङ्का ? - कार्यकालपक्षे।

## बाधबीजप्रकरणम्

१. पूर्वात् किं बलवत्?- परम्।

२. पुनः प्रसङ्गविज्ञानात्सिद्धमिति परिभाषा कदा प्रवर्तते ?

- विप्रतिषेधसूत्रस्य विधित्वस्वीकारे।

३. सकृद्गतौ विप्रतिषेधे इति परिभाषा कथं सिध्यति ?

- विप्रतिषेधसूत्रस्य नियमत्वाङ्गीकारे।

४. कैयटमते सकृद्गतिपरिभाषा कथं सिध्यति ? - व्यक्तिः पदार्थः इति पक्षे विप्रतिषेधसूत्रस्य नियमत्वाङ्गीकारे।

५. कैयटमते पुनः प्रसङ्गपरिभाषा कथं सिध्यति ? - जातिः पदार्थः इति पक्षे विप्रतिषेधसूत्रस्य विधित्वाङ्गीकारे।

६. द्वयोः कार्ययोः यौगपद्येन असम्भवः किंशास्त्रोपयोगी ?

- विप्रतिषेधशास्त्रोपयोगी।

७. विप्रतिषेधसूत्रस्थपरशब्दस्य कः अर्थः ? - इष्टम्।

८. विकरणेभ्यः कः बलीयान् ? - नियमः।

९. वृद्भ्यः स्यसनोः (१-३-९२) इति सूत्रेण का परिभाषा ज्ञाप्यते ?

- विकरणेभ्यो नियमो बलीयान्।

१०.कैयटमते यथोद्देशपक्षे संज्ञाशास्त्राणां विधिशास्त्रेण कथमन्वयः ?

- वाक्यैकवाक्यतया।

११. कैयटमते कार्यकालपक्षे संज्ञाशास्त्राणां विधिशास्त्रेण कथमन्वयः ?

- पदैकवाक्यतया।

१२. नागेशमते संज्ञाशास्त्राणां विधिशास्त्रेण कथमन्वयः?-वाक्यैकवाक्यतया।

१३. नागेशमते परिभाषाशास्त्राणां विधिशास्त्रेण कथमन्वयः? - पदैकवाक्यतया।

१४. परात् किं बलवत् ? - नित्यम्।

१५. किं नाम नित्यम् ? - कृताकृतप्रसङ्गि।

१६. लक्षणान्तरेण प्राप्नुवन् विधिः किं भवति ? - अनित्यः।

१७. वालिसुग्रीवयोः मध्ये कः प्रबलः इति वदन्ति ? - वाली।

१८. भगवत्सहायैः पाण्डवैः जये लब्धेऽपि के प्रबलाः इति वदन्ति ? - पाण्डवाः।

१९. स्वराभिन्नस्य प्राप्नुवन्विधिः किं भवति ? - अनित्यः।

२०. नित्यात् किं बलीयः ? - अन्तरङ्गम्।

२१. किं नाम अन्तरङ्गम् ? - अन्तर्भूतानि अङ्गानि = निमित्तानि यस्य तत्।

२२. किं नाम बहिरङ्गम् ? - बहिर्भूतानि अङ्गानि = निमित्तानि यस्य तत्।

२३. अन्तरङ्गशब्दे अङ्गशब्देन किं गृह्यते ? - शब्दरूपं निमित्तम्।

२४. अर्थनिमित्तकस्य बहिरङ्गत्वाभावे कः निषेधः चरितार्थः ?

- न तिसृचतसृ (६-४-४)

२५. अन्तरङ्गे कर्तव्ये किं किं बहिरङ्गम् असिद्धम् ? - जातं तत्कालप्राप्तिकञ्च।
२६. असिद्धपरिभाषायाः किं लिङ्गम् ? - अन्तरङ्गशास्त्रत्वम्।
२७. असिद्धपरिभाषा कुत्र न प्रवर्तते ? - त्रिपाद्याम्।
२८. वाह ऊठ् (६-४-१३२) सूत्रे ऊठ्ग्रहणेन का परिभाषा ज्ञाप्यते ?
- असिद्धं बहिरङ्गमन्तरङ्गे।
२९. असिद्धपरिभाषा सपादसप्ताध्यायीस्था इति केन ज्ञापितम् ?
- वाह ऊठ् (६-४-१३२) सूत्रे ऊठ्ग्रहणेन।
३०. ओमाङोश्च (६-१-९५) इति आङ्ग्रहणं कदा चरितार्थम् ?
- समकालप्राप्तबहिरङ्गस्वीकारादेव।
३१. पूर्वं धातुः उपसर्गेण युज्यते चेत् पश्चात् केन ? - साधनेन।
३२. पूर्वं धातुः साधनेन युज्यते चेत् पश्चात् केन ? - उपसर्गेण।
३३. पञ्च गावः यस्य सन्ति सः कः ? - पञ्चगुः।
३४. असुस्रुवत् इत्यादौ कीदृशम् अन्तरङ्गत्वम् ? - अन्तःकार्यत्वरूपम्।
३५. किं नाम अन्तःकार्यत्वम् ? - पूर्वोपस्थितनिमित्तकत्वम्।
३६. अन्तःकार्यत्वरूपम् अन्तरङ्गत्वं कथं सिद्धम् ? - लोकन्यायसिद्धम्।
३७. षत्वतुकोरसिद्धः (६-१-८६) इति सूत्रे तुग्ग्रहणेन का परिभाषा ज्ञाप्यते?
- नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः।
३८. बहिष्ट्वप्रक्लृप्तिः नाम का ? - बहिरङ्गत्वप्राप्तिः।
३९. नलोपः सुप्.... (८-२-२) सूत्रे तुग्ग्रहणं कदा चरितार्थम् ?
- नाजानन्तर्ये इति परिभाषास्वीकारे।
४०. बहिरङ्गः लुक् कान् बाधते ? - अन्तरङ्गानपि विधीन्।
४१. प्रत्ययोत्तरपदयोश्च (७-२-९८) सूत्रेण का परिभाषा ज्ञाप्यते ?
-अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते।
४२. बहिरङ्गः ल्यप् कान् बाधते ? - अन्तरङ्गानपि विधीन्।
४३. अदो जग्धिर्ल्यप्ति किति (२-४-३६) सूत्रे ल्यब्ग्रहणेन का परिभाषा ज्ञाप्यते ?
- अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते।
४४. वार्णात् किं बलीयः भवति ? - आङ्गम्।
४५. अभ्यासस्यासवर्णे (६-४-७८) सूत्रे असवर्णग्रहणेन का परिभाषा ज्ञाप्यते?
- वार्णादाङ्गं बलीयो भवति।
४६. वार्णादाङ्गपरिभाषा कुत्र प्रवर्तते ? - आङ्गवार्णयोः समानकार्यित्वे एव।

४७. वार्णादाङ्गपरिभाषा अङ्गसम्बन्धिनि आङ्गे एव इति कस्मिन् सूत्रभाष्ये उक्तम्?
- स्वरितो वा (८-२-६) इति।

४८. अकृतव्यूहाः के ? - पाणिनीयाः।

४९. अकृतव्यूहाः अस्य कः विग्रहः ? - न कृतः विशिष्टः ऊहः निश्चयः
शास्त्रप्रवृत्तिविषयः यैः ते।

५०. समर्थसूत्रे कैयटेन अकृतव्यूहशब्दस्य विग्रहः कथमुक्तः ?
- न कृतः व्यूहः विशिष्टः तर्कः निमित्तकारणविनाशेऽपि कार्यस्थितिरूपः।

५१. लोके निमित्तं कतिविधमुक्तम् ? - कार्यस्थितौ नियामकं तदनियामकञ्च।

५२. अन्तरङ्गात् कः बलवान् ? - अपवादः।

५३. येन नाप्राप्ते इत्यस्य कोऽर्थः ? - यत्कर्तृकावश्यप्राप्तौ।

५४. नाप्राप्ते इत्यत्र नञ्द्वयं किं बोधयति ? - प्रकृतार्थदार्ढ्यम्।

५५. विशेषशास्त्रस्य बाधकत्वे किं बीजम् ?
- सामान्यशास्त्राप्राप्तियोग्ये अचारितार्थ्यम्।

५६. क्वचिदपवादविषयेऽपि किम् अभिनिविशते ? - उत्सर्गः।

५७. पुरस्तादपवादाः कान् विधीन् बाधन्ते ? - अनन्तरान्।

५८. मध्येऽपवादाः कान् विधीन् बाधन्ते ? - पूर्वान्।

५९. विधिर्वा प्रतिषेधो वा कस्य भवति ? - अनन्तरस्य।

६०. अभिनिविशन्ते इत्यस्य कोऽर्थः ? - बुध्यारूढाः भवन्ति।

६१. प्रकल्प्य चापवादविषयपरिभाषायां प्रकल्प्यशब्दार्थः कः ? - परित्यज्य।

६२. अपवादो यद्यन्यत्र चरितार्थः तर्हि केन बाध्यते ? - अन्तरङ्गेण।

६३. अभ्यासविकारेषु किं नास्ति ? - बाध्यबाधकभावः।

६४. दीर्घोऽकितः (७-४-८३) इति सूत्रेऽकिद्ग्रहणेन का परिभाषा ज्ञाप्यते ?
- अभ्यासविकारेषु बाध्यबाधकभावो नास्ति।

६५. ताच्छीलिकेषु किं नास्ति ? - वासरूपविधिः।

६६. लादेशेषु किं नास्ति ? - वासरूपविधिः।

६७. हशश्वतोर्लङ् च (३-२-११६) इति लङ्विधानेन का परिभाषा ज्ञाप्यते ?
- लादेशेषु वासरूपविधिर्नास्ति।

६८. पञ्चमीसप्तमीनिर्देशे कः बलीयान् ? - पञ्चमीनिर्देशः।

## शास्त्रशेषप्रकरणम्

१. अयस्कुम्भी इत्यत्र सत्वोपपादनं कया परिभाषया ?
- प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्।

२. लिङ्गविशिष्टपरिभाषायाः किं ज्ञापकम् ? - कुमारः श्रमणादिभिः (२-१-७०) सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः।

३. तस्यापत्यम् (४-१-९२) इत्येकवचननुपंसकाभ्यां निर्देशात् गार्ग्यः,गार्ग्यौ इत्यादि कथम् ? - सूत्रे लिङ्गवचनमतन्त्रं परिभाषया।

४. अतन्त्रं नाम कोऽर्थः विवक्षितः ? - अविवक्षितम्।

५. सूत्रे लिङ्गवचनपरिभाषायाः ज्ञापकं किम् ? - अर्धं नपुंसकम् (२-२-२) सूत्रे नपुंसकग्रहणम्।

६. नञिवयुक्तयोः कुत्र अर्थगतिः ? - अन्यसदृशाधिकरणे।

७. सुबुत्पत्तेः प्राक् कृद्भिः सह समासवचनं केषाम् ? - गतिकारकोपपदानाम्।

८. साम्प्रतिकाभावे कस्य गतिः ? - भूतपूर्वस्य।

९. तत्तद्वचनसामर्थ्यन्यायसिद्धा परिभाषा का ? - साम्प्रतिकाभावे भूतपूर्वगतिः।

१०. तद्गुणसंविज्ञानं नाम किम् ? - तेषां गुणानाम् अवयवपदार्थानां संविज्ञानं विशेष्यान्वयित्वम्।

११. चानुकृष्टं कुत्र न ? - उत्तरत्र।

१२. स्वरविधौ किम् अविद्यमानवत् ? - व्यञ्जनम्।

१३. निरनुबन्धकग्रहणे कस्य ग्रहणं न ? - सानुबन्धकस्य।

१४. तदनुबन्धकस्य ग्रहणे कस्य ग्रहणं न ? - अतदनुबन्धकस्य।

१५. निरनुबन्धकतदनुबन्धकपरिभाषयोः कुत्र अप्रवृत्तिः ? - वर्णग्रहणे।

१६. सुपथी नगरी इत्यत्र इनः स्त्रियाम् (५-४-१५२) इति कप् कुतो न ?
- समासान्तविधिरनित्यः परिभाषया।

१७. शतानि इत्यादौ षट्संज्ञावारणं कथम् ? - सन्निपातलक्षणो विधिरनिमित्तं तद्विधातस्य इति परिभाषया।

१८. सन्निपातः कः ? - द्वयोः सम्बन्धः।

१९. सन्निपातलक्षणः अस्य कः विग्रहः ? - सन्निपातः लक्षणं यस्य सः।

२०. सन्निपातपरिभाषा किन्न्यायमूला ? - उपजीव्यविरोधस्य अयुक्तत्वम् इति।

२१. सन्निपातशब्देन पूर्वपरयोः सम्बन्धः एव न अपि तु किं गृह्यते ?
- विशेषणविशिष्यसन्निपातोऽपि।

२२. सन्निपातपरिभाषायाः किं लिङ्गम् ? - सन्निपातलक्षणविधित्वम्।

२३. न यासयोः (७-३-४५) इति निर्देशात् का परिभाषा अनित्या ?

- सन्निपातपरिभाषा।

२४. सन्नियोगशिष्टानामन्यतरापाये कयोः अपि अपायः ? - उभयोः।

२५. धातोः कार्यमुच्यमानं क्व भवति ? - तत्प्रत्यये।

२६. सर्वकि इत्यादौ अकचि सर्वनामसंज्ञा कथम् ?

- तन्मध्यपतितस्तद्ग्रहणेन गृह्यते।

२७. नेदमदसोरकोः(७-१-११) सूत्रे अकोः इति निषेधेन का परिभाषा ज्ञाप्यते?

- तन्मध्यपतितपरिभाषा।

२८. लुग्विकरणालुग्विकरणयोः कस्य ग्रहणम् ? - अलुग्विकरणस्य।

२९. हेरचङि (७-३-५६) निषेधेन का परिभाषा ज्ञाप्यते ?

- प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्।

३०. द्व्योः (१-२-५९) सूत्रनिर्देशात् का परिभाषा अनित्या ?

- अङ्गवृत्ते पुनर्वृत्तावविधिः।

३१. ओर्गुणः (६-४-११६) सूत्रे गुणग्रहणेन का परिभाषा ज्ञाप्यते ?

- संज्ञापूर्वकविधिरनित्यः।

३२. 'सागरं तर्तुकामस्य' इत्यादि इडागमरहितरूपं कथम् ?

- आगमशास्त्रमनित्यम् इति परिभाषया।

३३. तनादिकृञ्भ्य उः (३-१-७९) सूत्रे पृथक् कृञ्ग्रहणात् का परिभाषा सिध्यति?

- गणकार्यमनित्यम्।

३६. चक्षिङः ङित्करणात् का परिभाषा सिध्यति ?

- अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्।

३७. सर्वविधिभ्यः कः कः विधिः बलवान् ? - लोपविधिः इड्विधिश्च।

३८. परिभाषा कुत्र नोपतिष्ठते ? - अनुवादे।

३९. उपपदविभक्तेः का विभक्तिः बलीयसी ? - कारकविभक्तिः।

४०. कारकविभक्तित्वं नाम किम् ? - क्रियाजनकार्थकविभक्तित्वम्।

४१. उपपदविभक्तिपरिभाषा कीदृशी ? - वाचनिकी।

४२. अनन्त्यविकारे अस्य कः विग्रहः ? - न अन्त्यविकारः येन तत्। तस्मिन्।

४३. अनन्त्यविकारपरिभाषायाः किं लिङ्गम् ? - अनन्त्यविकारे इति।

४४. प्रधानाप्रधानयोः कुत्र कार्यसम्प्रत्ययः ? - प्रधाने।

४५. अवयवप्रसिद्ध्यपेक्षया का बलीयसी ? - समुदायप्रसिद्धिः।

४६. विधिनियमसम्भवे कः बलवान् ? - विधिरेव।

४७. सामान्यातिदेशे कस्य अनतिदेशः ? - विशेषस्य।

४८. सामान्यातिदेशपरिभाषायाः अनित्यत्वे किं लिङ्गम्?- न ल्यपि (६-४-६९)

४९. प्रत्ययाप्रत्यययोः कस्य ग्रहणम् ? - प्रत्ययस्य।

५०. सहचरितासहचरितयोः कस्य ग्रहणम् ? - सहचरितस्य।

५१. सहचरितपरिभाषायां सहचरितं किमुच्यते ? - सादृश्यवान्।

५२. श्रुतानुमितयोः कः बलवान् ? - श्रुतसम्बन्धः।

५३. लक्षणप्रतिपदोक्तयोः कस्य ग्रहणम् ? - प्रतिपदोक्तस्य।

५४. वृद्ध्यादयः संज्ञाः समुदाये कुतो न ? - प्रत्येकं वाक्यपरिसमाप्तिः।

५५. अभेदका गुणाः इत्यत्र अभेदकाः नाम कोऽर्थः ? - अविवक्षिताः।

५६. नागेशमते निपातनं नाम किम् ?

- अन्यादृशे प्रयोगे प्राप्ते अन्यादृशप्रयोगकाणम्।

५७. पर्जन्यवत् कस्य प्रवृत्तिः ? - लक्षणस्य।

५८. लक्ष्ये लक्षणस्य कियद्वारं प्रवृत्तिः ? - सकृदेव।

५९. अनिर्दिष्टार्थाः प्रत्ययाः कस्मिन् अर्थे भवन्ति ? - स्वार्थे।

६०. अनिर्दिष्टार्थपरिभाषायां स्वार्थपदस्य कोऽर्थः ? - स्वीयप्रकृत्यर्थः।

६१. पर्यायशब्दानां का चर्चा न क्रियते ? - लाघवगौरवचर्चा।

६२. पूर्वत्रासिद्धीयमद्वित्वे इति परिभाषायाः कोऽर्थः ? - द्वित्वभिन्ने पूर्वत्र कर्तव्ये परम् असिद्धम्।

६३. सम्प्रसारणं तदाश्रयञ्च कार्यं किं भवति ? - बलवत्।

६४. क्वचिद्विकृतिः किं गृह्णाति ? - प्रकृतिम्।

६५. औपदेशिकप्रायोगिकयोः कस्य ग्रहणम् ? - औपदेशिकस्य।

६६. यङ्लुकि पञ्च कानि न ? - श्तिपा शपा अनुबन्धेन गणेन एकाज्ग्रहणेन च निर्दिष्टम्।

६७. पदगौरवापेक्षया कः गरीयान् ? - योगविभागः।

६८. अर्धमात्रालाघवेन पुत्रोत्सवं के मन्यन्ते ? - वैयाकरणाः।



# लघुशब्देन्दुशेखरः

## संज्ञाप्रकरणम्

१. लघुशब्देन्दुशेखरस्य रचयिता कः? - नागेशभट्टः ।

२. शिवभट्टसुतः सतीदेव्याः च गर्भजः कः ? - नागेशभट्टः ।

३. शिवपक्षे 'लघुशब्देन्दुशेखरः' इत्यस्य कः विग्रहः? - शब्दः एव इन्दुः शब्देन्दुः। लघुश्चासौ शब्देन्दुः लघुशब्देन्दुः। सः शेखरः यस्य सः।

४. ग्रन्थपक्षे 'लघुशब्देन्दुशेखरः' इत्यस्य कः विग्रहः? - शब्दः इन्दुः इव शब्देन्दुः। लघुः शब्देन्दुः शेखरः भूषणं यस्य सः।

५. ऋषित्रयनमस्काररूपं मङ्गलं किमर्थम्? - दुरितप्रशमाय।

६. मुनित्रयम् इत्यत्र कारकविभक्तेः बलवत्त्वात् का विभक्तिः? - द्वितीया।

७. तदुक्तीः इत्यस्य कः कः अर्थः? - प्राचामुक्तीः, त्रयाणां मुनीनामुक्तीः।

८. तदुक्तीः इत्यत्र तच्छब्दः कीदृशः? - बुद्धिस्थपरामर्शकः।

९. परिभाव्य इत्यस्य कोऽर्थः? - विचार्य तिरस्कृत्य च।

१०. अइउण् इत्यादीनां कथं संज्ञासूत्रत्वम्? - आदिरन्त्येनेत्यनेनैकवाक्यतया वृत्तपरिच्छेदकत्वेन।

११. वृत्तपरिच्छेदकत्वं नाम किम्? - शक्तिग्राहकत्वम्।

१२. अइउण् इत्यादिषु कुतो न संहिताकार्यम्? - संहिताया अविवक्षया।

१३. अइउण् इत्यादिषु वर्णेभ्यः विभक्त्युत्पत्तिः कुतो न?- अनुकरणत्वेन सौत्रत्वाच्च।

१४. अइउण् इत्यादिषु वर्णेभ्यः कारप्रत्ययः कुतो न ? - बाहुलकात्।

१५. अइउण् इत्यादिषु सन्धौ कृते सन्देहवारणं कथम्? - व्याख्यानतः।

१६. माहेश्वराणि इत्यस्य कोऽर्थः? - महेश्वरादागतानि ।

१७. पाणिनीयव्याकरणस्य वेदाङ्गत्वं कथम्? - श्रुतिमूलत्वात्।

१८. लण्सूत्रे 'णकारविषयाचार्यप्रवृत्तिर्ज्ञापयति - व्याख्यानत' इत्यत्र आचार्यपदार्थः कः?- महेश्वरः।

१९. अनुबन्धाः केन कृताः? - महेश्वरेण।

२०. नटराजराजः कियद्वारं ढक्कां ननाद? - नवपञ्चवारम्।

२१. कान् उद्धर्तुकामः ढक्कां ननाद? - सनकादिसिद्धान्।

२२. 'अनुबन्धकरणार्थश्च वर्णानामुपदेशः' इति भाष्येण अनुबन्धानां किं सूचितम्? - सादित्वम्।

२३. प्रत्याहारसंज्ञाप्रणयनं किमर्थम्? - लाघवेन शास्त्रप्रवृत्त्यर्थम्।

२४. रप्रत्याहारः कस्य मते नास्ति? - नागेशस्य।

२५. किं नाम अन्योन्याश्रयत्वम्? - स्वज्ञानाधीनज्ञानाधीनज्ञानविषयत्त्वम् अथवा परस्परज्ञप्त्यधीनज्ञप्तिविषयत्वम्।

२६. आद्यन्ताभ्यां कः आक्षिप्यते? - समुदायः।

२७. प्रत्याहारे अन्त्यस्य संज्ञित्वं कुतो न? - इत्संज्ञालोपाभ्यामपहारात्।

२८. अचि श्नुधात्विति सूत्रे य्वोरिति निर्देशात् किं ज्ञायते? - इण् परेणैव।

२९. हलन्त्यम् (१-३-३) सूत्रे कति पदानि? - द्वे पदे।

३०. नागेशमते अनुबन्धाः किदृशाः? - एकान्ताः।

३१. दीक्षितमते उपदेशशब्दः कः? - भावघञन्तः।

३२. नागेशमते उपदेशशब्दः कः? - करणघञन्तः।

३३. आद्यत्वं केषाम्? - एतद्व्याकरणशास्त्रप्रवर्तकाचार्याणामेव।

३४. आद्यत्वं नाम किम्? - अज्ञातस्वस्वरूपज्ञापकत्वम्।

३५. अइउण् इत्यादीनां कथं प्रातिपदिकत्वम्? - क्रमबोधकत्वेन अर्थवत्त्वात्।

३६. 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' इत्यत्र नागेशमते पाणिनीयाः इत्यस्य कोऽर्थः? - पाणिनिप्रभृतिप्रोक्ताः वर्णाः।

३७. कुक्कुटरुते उकारे काः मात्राः प्रसिद्धाः? एकद्वित्रिमात्राः।

३८. ऊकालोऽजिति सूत्रे ऊपदेन किं लक्ष्यते? - स्वोच्चारणकालसदृशः कालः।

३९. उच्चैरुदात्त : (१-२-२९) सूत्रे उच्चैस्त्वं कीदृशम्?- स्थानकृतम्।

४०. उच्चैरुदात्तः (१-२-२९) सूत्रे उच्चैः इति किंशक्तिप्रधानम्? - अधिकरणशक्तिप्रधानम्।

४१. समाहारः स्वरितः (१-२-३१) सूत्रे समाहार इति शब्दः कीदृशः? - अधिकरणघञन्तः।

४२. मुखनासिकासूत्रे वचनशब्दः कीदृशः? - कर्मणि ल्युडन्तः।

४३. मुखनासिकावचनः इत्यत्र केन समासः? - 'साधनं कृता पादहारकाद्यर्थम् इति भाष्यवार्तिकेन।

४४. तुल्यास्यसूत्रे आस्यशब्देन किं गृह्यते? - उच्चारणस्थानम्।

४५. प्रकृष्टः यत्नः कः? - आभ्यन्तरः।

४६. अकुहेत्यादौ कण्ठपदं किम्परम् ? - कण्ठस्थानतत्समीपजिह्वामूलस्थानोभयपरम्।

४७. पूर्वत्रासिद्धसूत्रे असिद्धशब्दार्थः कः?- अनिष्पन्नम्, अप्रवृत्तम्।

४८. 'पूर्वत्र न' इति सूत्रिते किं सूत्रम् असङ्गतं स्यात् ? - नलोपः सुप्सूत्रम्।

४९. अनुप्रदानं नाम किम् ? - बाह्यप्रयत्नः।

५०. नागेशमते ऋलृवर्णयोः इत्यत्र कः विग्रहः ? - आ च लृवर्णश्च। तयोः।

५१. अणुदित्सूत्रेण कमुद्दिश्य सवर्णबोधकता विधीयते? - अणम्।

५२. प्रतीयते विधीयते इति प्रत्ययः कस्य मते? - दीक्षितस्य।

५३. प्रत्ययग्रहणम् एकदेशानुमत्या भाव्यमानपरिभाषां ज्ञापयतीति कस्य मते?
- नागेशस्य।

५४. तपरस्तत्कालस्येति सूत्रे बहुव्रीह्याश्रयणे किं मानम्?
- अतो भिस ऐस् (७-१-९ ) इत्यादि।

५५. तपरस्तत्कालस्येति सूत्रे पञ्चमीतत्पुरुषसमासाश्रयणे किं मानम्?
- वृद्धिरादैच् (१-१-१)

५६. तपरस्तत्कालस्य (१-१-७०) सूत्रम् आद्गुणः (६-१-८७) इत्यादौ विभक्तितकारे कुतो न प्रवर्तते? - उपसर्गादृति धातौ (६-१-९१) इति तपरकरणात्।

५७. वृद्धिरादैच् (१-१-१) इत्यत्र कति पदानि? - त्रीणि।

५८. वृद्धिरादैच् (१-१-१) सूत्रस्य वाक्यार्थः कः? - आदैचः वृद्धिपदाभिन्नाः।

६०. सर्वे सर्वार्थवाचकाः इति केषां दृष्ट्या? - योगिनाम्।

६१. शास्त्रं केषामुद्देशेन प्रवृत्तम् ? - अस्मदादीनाम्।

६२. उपसर्गसंज्ञासूत्रे योगशब्दः किं बोधयति?
- यदर्थे प्रादीनामन्वयः तं प्रत्येव उपसर्गत्वम् इति।

६३.गतिश्च (१-४-६०) सूत्रे चकारः किमर्थः? - उपसर्गसंज्ञासमावेशार्थः।

६४. न वेति विभाषा (१-१-४४) सूत्रं किमर्थम्? - उभयत्र विभाषार्थम्।

६५. अर्थविशिष्टः शब्द संज्ञी इत्यनेन का परिभाषा सिद्धा? - अर्थवद्ग्रहणपरिभाषा।

६६. येन विधिरिति सूत्रे येनेति कस्मिन् अर्थे तृतीया ? - करणे।

६७. येन विधिरिति सूत्रे विधिरित्यत्र कस्मिन् अर्थे किः ? - भावे।

६८. शब्दरूपं विशेष्यमादाय तदन्तविधिः कुत्र? - सति गमके क्वचित्।

६९. येन विधिरिति सूत्रस्य कः बोधः? - आचार्यकर्तृकं विधेयकर्मकं यत्करणकं विधानं तत् तदन्तस्य संज्ञा।

७०. विरामोऽवसानम् (१-४-११०) सूत्रे विराम इति कस्मिन्नर्थे घञ् ? - भावे।

७१. विरामः नाम कः ? - वर्णानाम् उच्चारणाभावः।

७२. सुप्तङन्तं पदं (१-४-१४) सूत्रे सुप् नाम कः? - प्रत्याहारः।

७३. हलोऽनन्तराः संयोगः (१-१-७) सूत्रेण कीदृशहलः संयोगसंज्ञा?

- समुदायस्य।

७४. संयोगेति महासंज्ञा केषामनुरोधात् ? - प्राचाम्।

७५. यत्र बहवः श्लिष्टाः तत्र केषां संयोगः? - द्वयोः द्वयोः एव।

## परिभाषाप्रकरणम्

१. इको गुणवृद्धी (१-१-३) कीदृशं सूत्रम्? - परिभाषासूत्रम्।

२. इक्परिभाषायाः किं लिङ्गम् ? - विधेयसमर्पकगुणवृद्धिपदश्रुतिः।

३. उदीचामातः स्थाने... इति सूत्रे स्थानेग्रहणं किमर्थम्? - स्पष्टार्थम्।

४. आद्यन्तौ टकितौ (१-१-४६) सूत्रे प्रत्येकान्वयः कथम्?

- समूहयोः अन्वयबोधोत्तरम्।

५. आद्यन्तपरिभाषायां यच्छब्दार्थः कः ? - आद्यन्ताक्षिप्तः अवयवी।

६.मिदचोऽन्त्यात्परः (१-१-४७) सूत्रं कयोरपवादः?

- स्थानेयोगत्वप्रत्ययपरत्वयोः।

७. स्थानेयोगा इत्यस्य कोऽर्थः? - स्थानपदार्थनिरूपितसम्बन्धार्थिका।

८. स्थानशब्दे कस्मिन्नर्थे ल्युट्? - भावे ।

९. स्थानेऽन्तरतमः (१-१-५०) सूत्रस्य नियामकत्वं कथम्?- विध्येकवाक्यतया।

१०. स्थानेऽन्तेरतमसूत्रे स्थानग्रहणेन का परिभाषा ज्ञाप्यते ?

- यत्रानेकविधमान्तर्यं तत्र स्थानतः आन्तर्यं बलीयः।

११. तस्मिन्निति परिभाषायाः कोऽर्थः?

- सप्तम्यन्तार्थेऽव्यहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यम्।

१२. उपश्लेषः नाम कः? - समीपवृत्तित्वम्।

१३. तस्मादिति परिभाषायां तस्मादिति कीदृशी पञ्चमी? - दिग्योगलक्षणपञ्चमी।

१४. अलोऽन्त्यस्य (१-१-५२) सूत्रार्थः कः?

- स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्य।

१५. ङिच्च (१-१-५३) सूत्रं किमर्थम्? - अनेकालर्थम्।

१६. अनेकाल्शित्सर्वस्य (१-१-५५) सूत्रार्थः कः?

- विधौ निर्दिष्टः यः अनेकाल् शित् च स सर्वस्य इति।

१७. स्वरितेनाधिकारः (१-३-११) सूत्रार्थः कः?

- स्वरितत्वज्ञाप्यः अधिकारः विनियोगः इत्यर्थः।

१८. स्वरितेनेति सूत्रे तृतीया कस्मिन्नर्थे? - इत्थम्भूतलक्षणे।

१९. विनियोग : कीदृशः ? - प्रायेण उत्तरत्र उपस्थितिः, क्वचित् पूर्वत्रापि।

२०. परं शास्त्रं कथं बलवत् ? - विप्रतिषेधसूत्रात्।

२१. अपवादः कथं बलवान् ? - वचनप्रामाण्यात्।

## स्वरसन्धिप्रकरणम्

१. इकः स्थाने यण् स्यात् इत्यर्थः कस्मिन् वादे ? - कार्यशब्दवादे।

२. जातिपक्षे यथासंख्येनापि निर्वाहः इति कस्मिन् सूत्रे भाष्ये? - स्थानेन्तरतमसूत्रे।

३. प्रत्याहारेषु जातिपक्ष एव इति कस्मिन् सूत्रे भाष्ये? - अणुदित्सूत्रे भाष्ये।

४. ल्वादयः इत्यादिनिर्देशाः कस्याश्रयणे मानम्? - जातिपक्षस्य।

५. अनचि च (८-४-४७) सूत्रे चकारार्थः कः? - विध्यर्थः।

६. अनचि इति कीदृशः प्रतिषेधः? - प्रसज्यप्रतिषेधः।

७. स्थानिवत्सूत्रे कीदृशः अतिदेशः? - कार्यातिदेशः।

८. कः कार्यातिदेशात् अभिन्नरूपः ? - शास्त्रातिदेशः।

९. अनल्विधौ इति निषेधः कुत्र न प्रवर्तते? - अनुबन्धकार्ये।

१०. स्थानिवत्सूत्रे आदेशपदेन किं संगृह्यते? - आनुमानिकादेशोऽपि

११. शब्दानित्यत्वं कथं समाधेयम् ? - रेखागवयन्यायेन।

१२. भावातिदेशः कः ? - स्थानिनि सति यद्भवति तदादेशेऽपि भवति।

१३. अभावातिदेशः कः? - स्थानिनि सति यन्न भवति तदादेशेऽपि न।

१४. न पदान्तसूत्रे विधिशब्दः कः? - भावसाधनः।

१५. पदान्तः इत्यत्र शेखरे दर्शितः भाष्योक्तः समासः कः?- सप्तमीतत्पुरुषः।

१६. पदान्तः इत्यत्र अन्तशब्दः कः? - चरमावयववाची।

१७. अदर्शनं लोपः (१-१-६०) सूत्रे अदर्शनं कस्य?

- शास्त्रतः अर्थतो वा प्रसक्तस्य।

१८. अदर्शनं लोपः (१-१-६०) इति संज्ञा कस्य? - अर्थस्य।

१९. नादिन्याक्रोशसूत्रे पुत्रस्येति कीदृशी षष्ठी ? - अवयवषष्ठी।

२०. नादिन्याक्रोशसूत्रे आक्रोशः कः ? - निन्दा।

२१. तस्य लोपः ( १-३-९) सूत्रे तस्यग्रहणं किमर्थम्? - सर्वलोपार्थम्।

२२. कार्यित्वस्य चारितार्थ्यं कुत्र?- निमित्तत्वानाक्रान्ते विषये।

२३. कस्य मते वकारप्रश्लेषः नोचितः? - नागेशस्य।

२४. धातोस्तन्निमित्तस्यैव(६-१-८०) सूत्रे धातोरित्यभावे कः नियमः स्यात्? - प्रातिपदिकमात्रविषयः।

२५. क्षय्यजय्यौ शक्यार्थे (६-१-८२) सूत्रे क्षय्येत्यत्र कः धातुः? - क्षि क्षये।

२६. क्रयार्थत्वं कीदृशम् ? - फलोपधानरूपम्।

२७. वृक्षव् इत्यादेः अनभिधानं कस्य मते? - नागेशस्य ।

२८. ऋकारस्य गुणवृद्धी इत्युक्ते कौ ? - अरारौ।

२९. वस्तुतः रपरः इत्यस्य स्थाने किं पठनीयम् ? - र्लपरः।

३०. प्रष्ठं वहति इत्यर्थे किं रूपम्? - प्रष्ठवाट्।

३२. सुब्धातौ इत्यस्य कोऽर्थः? - सुबन्तप्रकृतिके धातौ।

३३. अचोऽन्त्यादिसूत्रे अचः इति कस्मिन्नर्थे षष्ठी?- निर्धारणे।

३४. कः विकल्पः? - शब्दज्ञानानुपाती वस्तुशून्यः।

३५. पतञ्जलिः इत्यत्र कः विग्रहः? - अञ्जलेः पतितः।

३६. मृताण्डादागतः कः? - मार्तण्डः।

३७. 'एवे चानियोगे' वार्तिके अनियोगः कः? - अनवधारणम्।

३८. ओतुः नाम कः? - बिडालः।

३९. तस्य परमाम्रेडितम् (८-१-२) सूत्रे तस्यग्रहणं किमर्थम्? - स्पष्टार्थम्।

४०. झलां जशोऽन्ते (८-२-३९) सूत्रे अन्तग्रहणं किमर्थम्?- झलीति निवृत्त्यर्थम्।

४१. प्रकृतिभावशब्दार्थः कः? - प्रकृत्या अवस्थानम्।

४२. स्फोटायनः इत्यत्र कः विग्रहः? - स्फोटः अयनं प्रतिपाद्यं यस्य सः।

४३. स्फोटायनः इत्यस्य कः अर्थः? - स्फोटप्रतिपादकः आचार्यः।

४४. ऋत्यकः (६-१-१२७) सूत्रं किमर्थम् ? - सवर्णार्थम् अनिगर्थञ्च।

४५. प्रत्यभिवादः कः? - प्रणामादिभिः आशिषं वाच्यमानः गुर्वादिः यत् प्रतिसंभाषते तत्।

४६. गुरोरनृतसूत्रं कुत्र प्रवर्तते? - दूराद्बोधने।

४७. निपात एकाजिति सूत्रे एकाजिति कः समासः?- कर्मधारयः।

४८. निपात एकाजिति सूत्रे अनाङ् इति कः नञ्?- पर्युदासः।

४९. मय उञो वो वा (८-३-३३) सूत्रे मय् कः? - प्रत्याहारः न तु धातुः।

५०. यः शिष्यते सः कम् अर्थम् अभिधत्ते? - लुप्यमानम्।

५१. अणोऽप्रगृह्यस्येति सूत्रे अण् केन णकारेण? - परेण।

## हल्सन्धिप्रकरणम्

५२. स्तोः श्चुना श्चुः (८-४-४०) सूत्रार्थे योगशब्दार्थः कः?- संयोगः।

५३. श्चुत्वविधायकसूत्रे निमित्तकार्यिणोः यथासंख्याभावे किं लिङ्गम्?
- शात् (८-४-४१) सूत्रम्।

५४. न पदन्तात्सूत्रे पदाट्टोः इत्येव सिद्धे अन्तग्रहणं किमर्थम् ? - स्पष्टार्थम्।

५५. षण्णवतिः इत्यत्र कः विग्रहः? - षडधिका नवतिः।

५६. रेफोष्मणां किं नास्ति? - सवर्णाः न सन्ति।

५७. मोऽनुस्वारः (८-३-२३) सूत्रे पदस्य इत्यधिकृतं केन विशेष्यते? - म इत्यनेन।

५८. नश्चापदान्तस्येति सूत्रे चकारेण किम् अनुकृष्यते?- मः।

५९. अनुस्वारस्य ययीति सूत्रे परेति कीदृशं पदम्? - लुप्तषष्ठीकं पृथक्पदम्।

६०. अनुस्वारस्य ययीति सूत्रे ययीति किमर्थम्? - स्पष्टार्थम्।

६१. हे मपरे वा (८-३-२६) सूत्रे मपरे इत्यत्र कः समासः? - बहुव्रीहिः।

६२. संख्यामनतिक्रम्य इत्यर्थे किं रूपम्? - यथासंख्यम्।

६३. संख्या इत्यत्र कः विग्रहः? - सम्यक् ख्यानम्।

६४. संख्या नाम का? - क्रमवैशिष्ट्येन ज्ञानम् ।

६५. डः सि धुट् (८-३-२९) सूत्रे सीति सप्तमी कस्मिन्नर्थे ? - षष्ठ्यर्थे।

६६. ङमो ह्रस्वादिति सूत्रे अचीति कस्मिन्नर्थे? - षष्ठ्यर्थे।

६७. ङमो ह्रस्वादिति सूत्रे अचीति सप्तमीनिर्देशः कुतः? - लाघवार्थः।

६८. इको यणचीति सूत्रे ङमुट् कुतो न? - सौत्रत्वात्।

६९. अत्रानुनासिकसूत्रे तुशब्दः किमर्थः? -परस्य नित्यं रुत्वं पूर्वस्य वा अनुनासिक इति विशेषद्योतनार्थः।

७०. अनुनासिकात् पर इत्यत्र कस्मिन्नर्थे पञ्चमी? - ल्यब्लोपे।

७१. अनुनासिकात्परेति सूत्रे अनुस्वारागमः किदृशः? - अनवयवः।

७२. उपधारञ्जनं नाम किम्?- अनुनासिकानुस्वारागमरूपम्।

७३. पुमः खय्यम्परे (८-३-६) सूत्रे अम्परे इत्यत्र कः समासः? - बहुव्रीहिः।

७४. संहिता नाम का? - स्वारसिकार्धमात्राकालव्यवायेनोच्चारणम्।

## विसर्गसन्धिप्रकरणम्

७५. शपरे विसर्जनीयः (८-३-३५) सूत्रे शपरे इत्यत्र कः समासः? - बहुव्रीहिः।

७६. इदुदुपधस्येति सूत्रे अप्रत्ययस्येति नञ् कः? - पर्युदासः।

७७. इसुसोः सामर्थ्ये (८-३-४४) सूत्रे इसुसोः इति कयोः ग्रहणम्?
- प्रातिपदिकावयवयोः।

७८. इसुसोस्सूत्रे सामर्थ्यं किं विवक्षितम्? - व्यपेक्षारूपम्।

७९. इसुसोस्सूत्रे एकार्थीभावसामर्थ्यस्वीकारे को दोषः?
- परमसर्पिः कुण्डिका इत्यादौ समासे षत्वविकल्पापत्तिः।

८०. अयस्कुम्भी इत्यादौ कथं सत्वम्? - लिङ्गविशिष्टपरिभाषया।

## स्वादिसन्धिप्रकरणम्

८१. प्रथमयोः पूर्वसवर्णः (६-१-१०२) सूत्रे प्रथमयोः इति कयोः ग्रहणम्?
- प्रथमाद्वितीयारूपसुब्विभक्त्योः।

८२. प्रथमयोः पूर्वसवर्णः (६-१-१०२) सूत्रे सवर्णग्रहणं किमर्थम्? - स्पष्टार्थम्।

८३. व्योर्लघुप्रयत्नतरेति सूत्रे व्योरिति निर्देशेन कस्य वारणं भवति?
- लोपो व्योरिति लोपस्य।

८४. लघुप्रयत्नतरः कः? - लघुतरः प्रयत्नः यस्य उच्चारणे सः।

८५. अहरहः इत्यत्र द्वित्वं केन सूत्रेण? - नित्यवीप्सयोः(८-१-४)

८६. ढ्रलोपे पूर्वस्येति सूत्रे कीदृशः बहुव्रीहिः इति भाष्ये दर्शितः? - व्यधिकरणः।

८७. विप्रतिषेधे सति किं कार्यम्? - परम्।

८८. एतत्तदोः इति एकशेषः कुतो न? - अनुकार्यस्वरूपभङ्गभिया।

८९. एतत्तदोस्सूत्रे सु इति किं विवक्षितम् ? - प्रथमैकचनम्।

## अजन्तप्रकरणम्

१. स्वादिविधौ कः अधिकारः? - प्रातिपदिकाधिकारः।

२. अधातुः इति कः नञ्? - पर्युदासः।

७४. संहिता नाम का? - स्वारसिकार्धमात्राकालव्यवायेनोच्चारणम्।

## विसर्गसन्धिप्रकरणम्

७५. शर्परि विसर्जनीयः (८-३-३५) सूत्रे शर्परि इत्यत्र कः समासः? - बहुव्रीहिः।

७६. इदुदुपधस्येति सूत्रे अप्रत्ययस्येति नञ् कः? - पर्युदासः।

७७. इसुसोः सामर्थ्ये (८-३-४४) सूत्रे इसुसोः इति कयोः ग्रहणम्?
- प्रातिपदिकावयवयोः।

७८. इसुसोस्सूत्रे सामर्थ्यं किं विवक्षितम्? - व्यपेक्षारूपम्।

७९. इसुसोस्सूत्रे एकार्थीभावसामर्थ्यस्वीकारे को दोषः?
- परमसर्पिः कुण्डिका इत्यादौ समासे षत्वविकल्पापत्तिः।

८०. अयस्कुम्भी इत्यादौ कथं सत्वम्? - लिङ्गविशिष्टपरिभाषया।

## स्वादिसन्धिप्रकरणम्

८१. प्रथमयोः पूर्वसवर्णः (६-१-१०२) सूत्रे प्रथमयोः इति कयोः ग्रहणम्?
- प्रथमाद्वितीयारूपसुब्विभक्त्योः।

८२. प्रथमयोः पूर्वसवर्णः (६-१-१०२) सूत्रे सवर्णग्रहणं किमर्थम्? - स्पष्टार्थम्।

८३. व्योर्लघुप्रयत्नतरेति सूत्रे व्योरिति निर्देशेन कस्य वारणं भवति?
- लोपो व्योरिति लोपस्य।

८४. लघुप्रयत्नतरः कः? - लघुतरः प्रयत्नः यस्य उच्चारणे सः।

८५. अहरहः इत्यत्र द्वित्वं केन सूत्रेण? - नित्यवीप्सयोः(८-१-४)

८६. ढ्रलोपे पूर्वस्येति सूत्रे कीदृशः बहुव्रीहिः इति भाष्ये दर्शितः? - व्यधिकरणः।

८७. विप्रतिषेधे सति किं कार्यम्? - परम्।

८८. एतत्तदोः इति एकशेषः कुतो न? - अनुकार्यस्वरूपभङ्गभिया।

८९. एतत्तदोस्सूत्रे सु इति किं विवक्षितम् ? - प्रथमैकचनम्।

## अजन्तप्रकरणम्

१. स्वादिविधौ कः अधिकारः? - प्रातिपदिकाधिकारः।

२. अधातुः इति कः नञ्? - पर्युदासः।

३. प्रातिपदिकसंज्ञासूत्रे अर्थवत्त्वं नाम किम् ? - प्रातिपदिकसंज्ञाफलभूतविभक्तीत-रसमभिव्याहारानपेक्षया लोके अर्थविषयकबोधजनकत्वम्।

४. अर्थवत्सूत्रे किं पदमावर्तते? - प्रत्ययेति।

५. संज्ञाविधौ इति निषेधः क्व प्रवर्तते? - प्रत्ययस्य यत्र संज्ञा तत्रैव।

६. पारिभाषिकार्थवत्त्वग्रहणे किं मानम्? - अर्थवत्सूत्रे अर्थवद्ग्रहणम्।

७. पारिभाषिकमर्थवत्त्वं कुत्र कुत्र स्वीक्रियते? - अर्थवत्सूत्रे कृत्तद्धितसूत्रे च।

८. अर्थवत्सूत्रे अर्थवद्ग्रहणाभावेऽपि सामान्यतः अर्थवत्त्वं कथं लभ्यते?
- अधातुः इति पर्युदासेन।

९. धात्वादीनां विशुद्धानां कः अर्थः न विद्यते? - लौकिकः।

१०. विभक्तेः प्राक् कस्य अर्थः न विद्यते? - कृत्तद्धितान्तस्य।

११. दश दाडिमानि षडपूपा इति निरर्थकसमुदायस्य कुतो न प्रातिपदिकसंज्ञा?
- अर्थवत्त्वाभावात्।

१२. कृत्तद्धितसमाससूत्रे समासग्रहणं किमर्थम्? - नियमार्थम्।

१३.कृत्तद्धितसूत्रे समासग्रहणेन कः नियमः फलति? - यत्र संघाते पूर्वो भागः पदम् उत्तरस्तु प्रत्ययो न तस्य चेद्भवति तर्हि समासस्यैव।

१४. समासकृतनियमे पदशब्देन किं गृह्यते? - स्वतन्त्रेण प्रयोगार्हम् अर्थवद्।

१५. भाष्ये समासग्रहणनियमविषये किमुक्तम्? - अर्थवत्समुदायानां समासग्रहणं नियमार्थम् इति।

१६. समासकृतनियमस्य किं फलम् ?- वाक्यस्य प्रातिपदिकत्ववारणम्।

१७. वाक्यस्य प्रातिपदिकसंज्ञायां कः दोषः? - सुपः लुक्प्रसङ्गः।

१८. शशशृङ्गादीनां शब्दानां कथं प्रातिपदिकत्वम् ? - बौद्धपदार्थत्त्वात्।

१९. स्वप्नाद्यनुरोधेन कस्य आवश्यकत्वम् ? - बौद्धपदार्थस्य।

२०. स्वप्रकृत्यर्थत्वं नाम किम् ? - धातुपाठकोशादौ तमुच्चार्य बोधितत्वम्।

२१. नभवधाद्यादेशानां किं नास्ति? - स्वार्थः।

२२. प्रत्ययशब्दस्य का व्युत्पत्तिः? - स्वीयमर्थं प्रत्याययन्ति।

२३. गुप्तिज्किद्भ्यः इत्यत्र कीदृशी पञ्चमी? - दिग्योगलक्षणा।

२४. किं नाम प्रकृतित्वम्? - प्रत्ययविधौ उद्देश्यतावच्छेदकाक्रान्तत्वम्।

२५. 'अपदं न प्रयुञ्जीत' इति किंन्यायमूलकम्?
- न केवला प्रकृतिः, नापि प्रत्ययः इति।

२६. 'प्रत्ययः पर एव' इत्यनेन कः न्यायः सिध्यति? - न केवला प्रकृतिरिति।

२७. परिनिष्ठितत्वं नाम किम् ? - अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्।

२८. ङ्याप्प्रातिपदिकात् इत्यत्र कः समासः? - समाहारद्वन्द्वः।

२९. बहिर्भूतापत्यादियोगः कस्य ? - स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्यैः संस्कृतस्य।

३०. सार्थकतद्धिताः कस्माद् भवन्ति? - सुबन्तात्।

३१. ङ्याप्प्रातिपदिकात् (४-१-१) सूत्रे ङ्याब्ग्रहणं कस्य उपलक्षणम्? - स्त्रीप्रत्यमात्रस्य।

३२. अत्यन्तस्वार्थिकानां प्रत्ययानां कस्मात्पूर्वम् उत्पत्तिः? - सुबुत्पत्तेः।

३३. स्वादिषु स्वौजसमौडित्यादिसूत्रे कः समासः ? - समहारद्वन्द्वः।

३४. स्वादिषु टङपानाम् इत्संज्ञकत्वे किं फलम् ? - लोपः।

३५. विभक्तिश्च (१-४-१०४) सूत्रे चकारः किमर्थः? - पुरुषवचनसंज्ञासमावेशार्थः।

३६. द्व्येकयोरिति सूत्रे द्व्येकशब्दौ कीदृशौ? - संख्यापरौ।

३७. बहुषु बहुवचनम् (१-४-२१) सूत्रे बहुशब्दार्थः कः? -त्रित्वादिपरार्धान्तसंख्या।

३८. एकस्मिन्नपि गुरवः समागताः इति कथम्? - अवयवाश्रयगतबहुत्वस्यावयविनि आरोप्य बोध्यः।

३९. एकशेषविषये द्वन्द्वप्राप्तिः कुतो न? - अन्तरङ्गत्वात् एकशेषस्यैव पूर्वं प्रवृत्तेः।

४०. शब्दतन्त्रं नाम किम् ? - शब्दस्य पर्यायपरिवृत्त्यसहत्वम्।

४१. अर्थतन्त्रं नाम किम्?- शब्दस्य पर्यायपरिवृत्तिसहत्वम्।

४२.द्विविधं तन्त्रं किम्?- शब्दतन्त्रम् अर्थतन्त्रञ्च।

४३. एकशेषः कीदृशविवक्षायां प्रवर्तते? - सहविवक्षायाम्।

४४. सरूपसूत्रेण किं विधियते? - एकशेषः।

४५. शेषशब्दार्थः कः? - इतरनिवृत्तिपूर्वकमवस्थानम्।

४६. सरूपसूत्रं भाष्यकृता कथं प्रत्याख्यातम्? - प्रत्यर्थं शब्दनिवेशमाश्रित्य।

४७. सरूपसूत्रे एकेति कीदृशं पदम्? - लुप्तविभक्त्यन्तं पृथक्पदम्।

४८. घटपटौ इत्यत्र एकशेषः कुतो न? - सरूपत्वाभावात्।

४९. चुञ्चुप्चणपोः चकारस्य कुतः न इत्त्वम्? - यकारादेः प्रश्लेषात्।

५०. न विभक्तौ तुस्माः (१-३-४) इति कस्य निषेधः? - हलन्त्यम् (१-३-३) सूत्रस्य।

५१. एकवचनं सम्बुद्धिः (२-३-४९) सूत्रस्थाने किं कर्तुमुचितम्? - सुः सम्बुद्धिः।
५३. लशकु इत्यत्र कः समासः? - समाहारद्वन्द्वः।
५४. अयोगाः इत्यस्य कः विग्रहः? - न विद्यते योगः वर्णसमाम्नाये येषां ते ।
५५. वाहाः इत्यत्र कः विग्रहः? - वाहयन्ति प्रयोगं निर्वाहयन्ति इति।
५६. अयोगवाहाः के? - अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः।
५७. अङ्गसंज्ञासूत्रे यस्मादिति किमर्थम्? - तदादीति तच्छब्दाकाङ्क्षापूरणाय।
५८. तदादि इत्यस्य कः विग्रहः? - तत् प्रकृतिरूपम् आदिः यस्य तत्।
५९. किं नाम समानाश्रयत्वम्? - असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदाया - न्यूनानतिरिक्ताश्रयकत्वम्।
६०. ङेर्यः(७-१-१३) सूत्रे ङेः इति कस्य ग्रहणम्? - चतुर्थ्येकवचनस्य।
६१. भाष्ये एकमुदाहरणं किं न प्रयोजयति इत्युक्तम्? - योगारम्भम्।
६२. अपदान्तस्येति सूत्रे ष इत्येव सिद्धे मूर्धन्यग्रहणं किमर्थम्? - इणः षीध्वमित्यस्य ढविधानार्थम्।
६३. सर्वादीनि इत्यत्र कीदृशः बहुव्रीहिः? - तद्गुणसंविज्ञानः।
६४. सर्वादीनि इत्यत्र आदिशब्दः कः? - अवयववाची।
६५. उद्भूतावयवभेदः इत्यस्य कोऽर्थः? - आरोपितावयवगतसङ्ख्यः।
६६. द्वन्द्वे च (१-१-३१) सूत्रे द्वन्द्वे इति कस्मिन्नर्थे सप्तमी? - प्रथमार्थे।
६७. नागेशमते अनुबन्धत्वं नाम किम्? - इत्संज्ञायोग्यवर्णवत्त्वम्।
६८. नागेशमते जसः शी इति आदेशः कथम्? - शित्त्वात् सर्वादेशः।
६९. दीक्षितमते अनुबन्धत्वं नाम किम्? - इत्संज्ञाकृतत्वम्।
७०. सर्वादिगणे उभशब्दपाठः किमर्थः? - अकजर्थः।
७१. सर्वादिगणे उभशब्दपाठः प्रत्याख्यातः कस्मिन्मते? - भाष्यमते।
७२. उभकेत्यत्र कप्रत्ययः कस्मिन्नर्थे? - अज्ञाताद्यर्थविशिष्टस्वार्थे।
७३. एकशब्दः क्व क्वार्थे प्रयुज्यते?- एकोन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे सङ्ख्यायाञ्च प्रयुज्यते ॥
७४. तृतीयासमासे (१-१-३०) सूत्रे कस्मिन् अर्थे सप्तमी?- प्रथमार्थे।
७५. जरायाः असुङ् कुतो न कृतः? - प्रतिपत्तिलाघवाय।
७६. विभक्त्यादेशेभ्यः परत्वात् जरस् इति केषां मतम्? - प्राचीनानाम्।
७७. नागेशमते पूर्वविप्रतिषेधात् जरसपेक्षया किम् इष्टम्? - विभक्त्यादेशाः।
७८. पद्दन्नोमासित्यादिभिः आदेशैः के आक्षिप्यन्ते? - स्वानुरूपाः स्थानिनः।

७९. यचि भम् (१-४-१८) सूत्रे समाहारद्वन्द्वे सति कुतो न टच्? - सौत्रत्वात्।

८०. उत्तराणि कारकाणि किं बाधन्ते? - अपादानम्।

८१. अल्लोपोऽनः (६-४-१३४) सूत्रे तपरकरणं किमर्थम्?

- आनः इत्यादौ लोपाभावाय।

८२. विश्वपाः इत्यत्र कः विग्रहः? - विश्वं पाति।

८३. नागेशमते क्त्वः, श्वः इत्यादि कथं साधितम्?- आतः इति योगविभागेन।

८४. पतिशब्दस्य घिसंज्ञा कदा भवति?- समासे एव।

८५. प्रत्ययलोपे प्रत्ययलक्षणम् (१-१-६२) सूत्रे आद्यप्रत्ययग्रहणं किमर्थम्?

-अवयवलोपे प्रत्ययलक्षणाभावार्थम्।

८६. स्थानिवत्सूत्रेण सिद्धे प्रत्ययलक्षणसूत्रं किमर्थम्? - नियमार्थम्।

८७. प्रत्ययलक्षणसूत्रं किं नियमयति?- प्रत्ययस्यासाधारणं रूपं यत्र तत्रैव इति।

८८. वातप्रमीः नाम कः?- निःशृङ्गो मृगाकृतिः जन्तुविशेषः।

८९. यू स्त्र्याख्यौ नदी(१-४-३) सूत्रे यू इति कयोः ग्रहणम्? - दीर्घयोः।

९०. स्त्र्याख्यौ इत्यत्र कः विग्रहः? - स्त्रियमाचक्षाते इति।

९१.नित्यस्त्रीत्वं नाम किम्?- प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरविशिष्टार्थानभिधायकत्वम्।

९२. ऋत उत् (६-१-१११) सूत्रे तपरकरणं किमर्थम्?

- सवर्णग्राहकताज्ञापनद्वारा आन्तर्यतः द्विमात्रनिवृत्त्यर्थम्।

९३. स्मृतौः इत्यस्य कः विग्रहः? - स्मृतः उः शम्भुः येन सः।

९४. रमा अस्य का व्युत्पत्तिः? - रमयति इति।

९५. लक्ष्मीः अस्य का व्युत्पत्तिः? - लक्ष्धातोः ईप्रत्यये मुडागमे इदं रूपम्।

९६. लक्ष्मी इदं रूपं कथम् ?- लक्ष्मशब्दात् 'कृदिकारादक्तिनः' इति ङीषि।

९७. नेयङुवङ्सूत्रे ङद्वयं किमर्थम्? - स्पष्टार्थम्।

९८. वामि (१-४-५) सूत्रे कथं पदच्छेदः? - वा, आमि।

९९. अतोम् (७-१-२४) इत्यत्र कथं पदविभागः?- अतः, अम्।

१००. सान्तमहतस्सूत्रे सान्तेति केन सह समानाधिकरणम्?- संयोगस्य इत्यनेन।

१०१. भाषितपुंस्कम् अत्र कः विग्रहः?- भाषितः पुमान् यस्मिन् तत्।

१०२. अस्थिदधिसूत्रे अनङ् इत्यत्र नकारादकारः किमर्थः? - उच्चारणार्थः।

१०३. एच इग्घ्रस्वादेशे (१-१-४८) सूत्रे कः समासः?- कर्मधारयः।

## हलन्तप्रकरणम्

१. दादेर्धातोरिति सूत्रे दादिग्रहणं किं लक्षकम्? - औपदेशिकदादित्ववत्।
२. एकाचो बशिति सूत्रस्थाने किं वक्तुमुचितम्? - झष् झषन्तस्य।
३. व्यपदेशिवत् अस्य कः विग्रहः? - विशिष्टः अपदेशः मुख्यव्यवहारः अस्य अस्तीति व्यपदेशः। तेन तुल्यम्।
४. रेफान्तस्य षट्संज्ञा कुतो नोक्ता? - चत्वारः इत्यत्र लुगापत्तेः।
५. रोः सुपीति सूत्रे सुप् कः विवक्षितः? - सप्तमीबहुवचनप्रत्ययः।
६. सुगण्ट्सु इत्यत्र टुकि जश्त्वं कुतो न?- टुकः असिद्धत्वात्।
७. नलोपः सुबिति सूत्रे विधिशब्दः कीदृशः?- भावसाधनः कर्मसाधनश्च।
८. पूर्वत्रासिद्धमित्येव सिद्धे न लोपः सुबिति सूत्रं किमर्थम्? - नियमार्थम्।
९. नलोपः सुप्सूत्रे कीदृशं नियमत्वम्?
- अन्यनिवृत्तिफलकसिद्धविषयकविधित्वम्।
१०. नलोपः सुप्सूत्रे सुब्विधिशब्देन किं गृह्यते?
- सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यकविधिः।
११. मघवा बहुलमिति सूत्रे मघवेति कस्मिन्नर्थे प्रथमा?- षष्ठ्यर्थे।
१२. अर्वणस्तृसूत्रे असौ इति कः नञ् उचितः? - पर्युदासः।
१३. इतोऽत्सूत्रे अदिति तपरत्वं किमर्थम्? - मुखसुखार्थम्।
१४. क्विन्प्रत्ययस्येति सूत्रे अतद्गुणसंविज्ञानः बहुव्रीहिः कथम्?
- प्रत्ययग्रहणसामर्थ्यात्।
१५. युवावौ द्विवचने (७-२-९२) सूत्रे द्विवचनशब्दः कीदृशः?- यौगिकः।
१६. युवावाविति सूत्रे द्विवचनशब्दस्य कः विग्रहः ? - द्वयोः वचनम्।
१७. सपूर्वायाः प्रथमायाः इति सूत्रे सहशब्दः कः? - विद्यमानवाची।
१८. सुपाद् इत्यस्य कः विग्रहः? - सु शोभनौ पादौ यस्य सः।
१९. अत्वसन्तस्येति सूत्रे चकारः कस्मिन्नर्थे ?- त्वर्थे।
२०. अत्वसन्तस्येति सूत्रे अतु इति कीदृशं पदम्? - लुप्तषष्ठीकं पृथक्।
२१. त्यदादिषु दृशेति सूत्रे आलोचनं किं विवक्षितम्?- ज्ञानमात्रम्।

## स्त्रीप्रत्ययप्रकरणम्

१. स्त्रीत्वं किन्निष्ठम्? - प्रत्यासत्या प्रकृत्यर्थनिष्ठम्।

२. शूद्रा चेति वार्तिकं कस्य अपवादः? - जातिलक्षणङीषः।

३. गौणमुख्यन्यायः किंविषयकः?- पदकार्यविषयकः।

४. आभीरी का? - महाशूद्री

५. आभीरः का?- ब्राह्मणात् उग्रकन्यायां जातः।

६. उग्रकन्या का? - नृपात् शूद्रायाम् उन्पन्ना।

७. अनुलोमसङ्कराणां किं जातिवृत्तित्वम्?- मातृजातिवृत्तित्वम्।

८. डाबुभाभ्यामिति सूत्रे अन्यतरस्याङ्ग्रहणं किमर्थम् - स्पष्टार्थम्।

९. प्रत्ययस्थात्सूत्रे क इत्यनेन किं विक्षितम्?- वर्णमात्रम्।

१०. प्रत्ययस्थात्सूत्रे ककारादकारः किमर्थः? - उच्चारणार्थः।

११. प्रत्ययस्थात्सूत्रे स्थग्रहणं किमर्थम् ? - स्पष्टार्थम्।

१२. न यासयोः (७-३-४५) सूत्रं किं सूत्रं निषेधति? - प्रत्ययस्थात्सूत्रम्।

१३. नागेशेन स्त्रियां केषामनभिधानमुक्तम्?

- आचारक्विबन्तप्रकृतिककर्तृक्विबन्तानाम्।

१४. पञ्चगवधनः इत्यस्य कः विग्रहः? - पञ्च स्त्रीगोव्यक्तयः धनं यस्य सः।

१५. आपिशला ब्राह्मणी इत्यत्र कः विग्रहः? - आपिशलिना प्रोक्तम् अधीते।

१६. टिड्ढाणञ्सूत्रे ठेत्येव सिद्धे ठक्ठञोरुपादानं किमर्थम् ? - ठन्ञिठोः व्यावृत्त्यर्थम्।

१७. चौरी इत्यस्य कः विग्रहः? - चुरा शीलम् अस्याः।

१८. किं नाम वयः? - प्राणिनां कालकृतावस्थाविशेषः।

१९. वयसि प्रथमे (४-१-२०) सूत्रे वयसि इत्यस्य कोर्थः ?

- वयोरूपे प्रवृत्तिनिमित्ते।

२०. कुण्डोध्नी इत्यत्र कः विग्रहः? - कुण्डमिव ऊधः यस्याःसा।

२१. जानपदकुण्डेति सूत्रे वृत्तिः नाम का? - अनुच्छेद्या जीविका।

२२.वोतो गुणेति सूत्रे गुणवचनं किं गृह्यते? - समस्तकृदन्ततद्धितान्तसर्वनामजाति-

संख्यासंज्ञाशब्दातिरिक्तः शब्दः।

२३. भाष्ये एकदेशिना गुणवचनलक्षणं किमुक्तम्?

- सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।

आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥

२४. पतिंवरा इत्यस्य कोऽर्थः? - पतिलाभोत्कण्ठावती।

२५. पुंयोगादाख्यायाम् (४-१-४८) सूत्रे पुंयोगादिति कस्मिन्नर्थे पञ्चमी?- हेतौ।

२६. पुंयोगात्सूत्रे आख्यायाम् इति कस्मिन्नर्थे सप्तमी? - पञ्चम्यर्थे।

२७. पुंयोगात्सूत्रे योगः कः? - सम्बन्धः।

२८. गोपालिका का? - गोपालकस्य स्त्री ।

२९. सूरी का? - सूर्यस्य मानुषी स्त्री (कुन्ती)

३०. लिपिः का? - अक्षरविन्यासः।

३१. पाणिगृहीती का? - अग्निसाक्षिकतया गृहीतपाणिका।

३२. मूर्तिः नाम का? - स्पर्शवद्द्रव्यपरिमाणम्।

३३. अशिश्वी इत्यस्य कः विग्रहः? - न विद्यते शिशुः यस्याः सा।

३४. जातिः का?- भिन्नेषु अभिन्नाभिधानप्रत्ययनिमित्तम्।

३५. आकृतिः नाम का? - अवयवसन्निवेशः।

३६. तटं नाम किम्?- जलसमीपदेशविशेषः।

३७. नागेशमते जातिलक्षणं किम् ? - आकृतिग्रहणम्।

३८. कैयटमते किं जातिलक्षणम् ? - आविष्टलिङ्गत्वं नियतलिङ्गत्वम्।

३९. भाष्ये जातेः लक्षणान्तरं किमुक्तम् ?

- प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः।
असर्वलिङ्गां वह्वर्थां तां जातिं कवयो विदुः ।।

४०. बलाका का? - बिसकण्ठिकापदवाच्यजातिविशेषवाची।

४१. औपम्यं नाम किम् ? - उपमायाः भावः।

## कारकप्रकरणम्

१. नागेशमते प्रातिपदिकार्थः कः? - प्रवृत्तिनिमित्तं तदाश्रयश्च।

२. भाष्ये प्रथमान्तार्थस्य कारकविभक्तित्वेन कथं व्यवहारः? - क्रियाजनकत्वात्।

३. अन्ततः सर्वत्र का क्रिया अस्ति? - अस्तिक्रिया।

४. प्रातिपदिकार्थसूत्रं कुत्र प्रवर्तते? - क्रियायोगे।

५. दीक्षितमते प्रातिपदिकार्थः कः? - नियतोपस्थितिकः।

६. अन्वयानुपपत्तिपूर्विका लक्षणा कुत्र भवति? - पदे।

७. प्रत्ययोत्पत्तिः सर्वत्र कस्मिन्नर्थे भवति?- शक्यार्थे।

८. लक्षणा नाम का? - शक्यतावच्छेदकारोपः।

९. अभेदः न संसर्गः इति कस्य मते? - नागेशस्य।

१०. 'प्रातिपदिकार्थः सत्ता' इत्यत्र सत्तेति कस्य उपलक्षणम्? - प्रवृत्तिनिमित्तस्य।

११. सम्बोधनं नाम किम्?- अभिमुखीकरणम्।

१२. सम्बोधनफलं किम् ? - प्रवृत्तिनिवृत्ती।

१३. भाष्ये कारकम् इत्यस्य व्युत्पत्तिः का प्रदर्शिता? - करोति क्रियां निर्वर्तयति।

१५. सर्वेषां कारकाणां प्रधानक्रियानिष्पादकत्वं कथम्? - स्वस्वावान्तरक्रियाद्वारा।

१६. कर्तुरीप्सिततमं कर्म(१-४-४९) सूत्रे ईप्सितशब्दः किम्परः?- क्रियापरः।

१७. कर्तुरीप्सितसूत्रे कर्तुरिति कस्मिन्नर्थे षष्ठी? - कर्तरि।

१८. आप्तिः का ? - सम्बन्धः।

१९. कर्मसंज्ञासूत्रार्थः कः ?- कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणम्।

२०. स्तोकं पचति इत्यादौ कथं कर्मत्वम्? - फलस्य व्यपदेशिवद्भावेन।

२१. कारके इति कस्मिन्नर्थे सप्तमी? - प्रथमार्थे।

२२. कारकशब्देन कति कारकाणि? -षट्।

२३. माषेषु अश्वं बध्नाति इत्यस्य कोऽर्थः?

- माषेषु प्रसक्तमश्वं माषनाशभियाऽन्यत्र बध्नाति।

२४. कर्तुरीप्सितसूत्रे तमब्ग्रहणाभावे सूत्रार्थः कः? - कर्तुरुद्देश्यं कर्म।

२५. वारयतेः कोऽर्थः ? - संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारः।

२६. ईप्सिततमत्वं नाम किम् ? - प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृत-धात्वर्थफलाश्रयत्वेन उद्देश्यत्वम्।

२७. सर्वकर्मविहितद्वितीयादीनां कोऽर्थः ? - कर्मत्वशक्तिमान्।

२८. हरिं भजतीत्यादौ कः बोधः ? - हरिकर्मकं भजनम्।

२९. तथायुक्तत्वं नाम किम् ? - समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्य-तद्धात्वर्थफलाश्रयत्वरूपम्।

३०. अनीप्सितं नाम किम्? - अनुद्देश्यम्।

३१. प्रधानकर्मत्वं किम्? - कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापार-विशेषणफलाश्रयत्वम्।

३२. दुहेरर्थ कः? - अन्तःस्थितद्रव्यनिष्ठविभागानुकूलव्यापारः।

३३. याचेः कोऽर्थः ? - स्वीकारानुकूलव्यापारः।

३४. रुधेरर्थः कः? - निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूल-व्यापारः।

३५. पृच्छेः कोऽर्थः? - जिज्ञासाविषयार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिला-पादिरूपः व्यापारः।

३६. ब्रूञोऽर्थः कः? - ज्ञानानुकूलः शब्दप्रयोगरूपः व्यापारः।

३७. नयतेरर्थः कः? - संयोगानुकूलव्यापारानुकूलव्यापारः।

३८. कृषेः कोऽर्थः? - बलाद्ग्रहणपूर्वकं देशान्तरप्रापणम्।

४०. प्रत्यवसानं नाम किम्?- भक्षणम्।

४१. भिक्षेः कुत्र वृत्तिः ? - हिंसाङ्गे भक्षणे।

४२. गतिबुद्धिसूत्रं कीदृशम्? - नियमसूत्रम्।

४३. उपपदविभक्तीनां कोऽर्थः ? - सम्बन्धः।

४४. कर्म प्रोक्तवन्तः के? - कर्मप्रवचनीयाः।

४५. इत्थम्भूतः कः ? - कश्चित्प्रकारं प्राप्तः।

४६. सुसिक्तम् इत्यत्र सुः कः ? - सेकगतपूज्यत्वद्योतकः।

४७. अतिक्रमणं नाम किम्? - उचितादधिकानुष्ठानम्।

४८. अपिः पदार्थसूत्रे पदार्थः कः ? - अप्रयुज्यमानपदान्तरस्यार्थः।

४९. अत्युक्तिः का? - असम्भाव्यार्थसम्भावनम्।

५०. अत्यन्तसंयोगः कः? - निरन्तरं सम्बन्धः।

५१. स्वातन्त्र्यं नाम किम् ? - कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम्।

५२. प्रकृष्टं नाम किम् ? - यद्व्यापाराव्यवधानेन क्रियानिष्पात्तिः तत्।

५३. करणतृतीयायाः कोऽर्थः? - करणत्वशक्तिमान्।

५४. सहार्थः कः ? - साहित्यम्।

५५. हेतुर्नाम कः? - कारणम्।

५६. सम्प्रदानचतुर्थ्यर्थः कः? - सम्प्रदानत्वशक्तिमान्।

५७. अभिलष्यतिकर्ता कः ?- यत्किञ्चिद्विषयकप्रीत्यनुकूलव्यापाराश्रयः।

५८. धारेरुत्तमर्णः(१-४-३५) सूत्रे धारिः कः? - धृङ् अवस्थाने ण्यन्तः।

५९. राधीक्ष्योः कोऽर्थः? - प्रश्नविषयार्थपर्यालोचनम्।

६०. क्रियार्थम् इत्यत्र कः विग्रहः? - क्रिया अर्थः फलं यस्य तत्।

६१. स्वस्त्यर्थः कः? - मङ्गलं कुशलं वा।

६२. ध्रुवं नाम किम्? - स्थिरम्।

६३. अपायः कः ? - विभागजनकः व्यापारः।

६४. वृक्षाद्भूमिं पतति अत्रः कः बोधः?
- वृक्षापादानकविभागपूर्वकसंयोगानुकूलः व्यापारः।

६५. आयातेः कोऽर्थः?- विभागपूर्वकोत्तरदेशसंयोगानुकूलः व्यापारः।

६६. प्रकृतिः का? - उपादानकारणम्।

६७. ब्रह्म किम् ?- मायाशबलं जगदुपादानकारणम्।

६८. प्रभवनं नाम किम् ? - प्रथमप्रकाशनम्।

६९. प्रतिनिधिप्रतीति सूत्रे यस्मात् इति पञ्चम्यर्थः क? - सम्बन्धः।

७०. प्रतिनिधिः नाम कः?- सदृशः।

७१. प्रतिदानं नाम किम् ? - दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम्।

७२. शेषः कः ? - उक्तादन्यः।

७३. दकशब्दः कः ? - उदकवाची।

७४. श्लेष्मणः कः? - चौररुजा।

७५. अकेनोरिति सूत्रे किं नेष्यते? - यथासंख्यम्।

७६. भावः नाम कः?- क्रिया।

७७. क्रियाश्रयः कः? - कर्ता कर्म च।



# अष्टाध्यायी

१. अष्टाध्याय्याः रचयिता कः? - पाणिनिः।

२ अष्टाध्यायी इत्यत्र कः विग्रहः? - अष्टानाम् अध्यायानां समाहारः।

३. अष्टाध्यायी इत्यत्र कः समासः? समाहारद्विगुः।

४. अष्टाध्याय्यां कति अध्यायाः सन्ति? - अष्टौ।

५. अष्टाध्याय्याम् आहत्य कति पादाः सन्ति? - द्वात्रिंशत्।

६. अष्टाध्याय्यां प्रत्येकमध्याये कति पादाः सन्ति? - चत्वारः।

७. अष्टाध्याय्यां कति सूत्राणि सन्ति? - उपचतुस्सहस्रम्।

८. अष्टाध्याय्यां प्रथमं सूत्रं किम्? - वृद्धिरादैच् (१-१-१)

९. अष्टाध्याय्याम् अन्तिमं सूत्रं किम्? - अ अ (८-४-६८)

१०. प्रथमाध्याये प्रगृह्यसंज्ञासूत्राणि कति? - नव।

११. निष्ठासंज्ञाविधायकं सूत्रं कस्मिन् अध्याये अस्ति? - प्रथमाध्याये।

१२. प्रथमाध्याये अव्ययसंज्ञासूत्राणि कति? - पञ्च।

१३. अष्टाध्याय्यां प्रातिपदिकसंज्ञासूत्राणि कति? - द्वे।

१४. प्रथमाध्याये इत्संज्ञासूत्राणि कति? - षट्।

१५. अष्टाध्याय्यां पदसंज्ञासूत्राणि कति? - चत्वारि।

१६. अष्टाध्याय्याम् अपादानसंज्ञासूत्राणि कति? - अष्टौ।

१७. अष्टाध्याय्यां सम्प्रदानसंज्ञासूत्राणि कति? - दश।

१८. कारके (१-४-२३) इत्यधिकारे कति सूत्राणि पठितानि? - द्वात्रिंशत्।

१९. कर्मप्रवचनीयाः (१-४-८३) इत्यधिकारे कति सूत्राणि सन्ति? - पञ्चदश।

२०. अन्यपदार्थे च संज्ञायाम् (२-१-२१) सूत्रं कस्मिन्नधिकारे अस्ति?

- अव्ययीभावः (२-१-५) इति।

२१. तत्पुरुषः (२-१-२२) इति अधिकारे कति सूत्राणि सन्ति? - द्विसप्ततिः।

२२. संख्यापूर्वो द्विगुः (२-१-५२)इति कस्मिन्नधिकारे अस्ति?

- तत्पुरुषः (२-१-२२) इति।

२३. अनभिहिते (२-३-१) इत्यधिकारे कति सूत्राणि सन्ति? - द्विसप्ततिः।

२४. कर्मणि द्वितीया इति सूत्रं कस्मिन् अध्याये अस्ति? - द्वितीयाध्याये।

२५. अव्ययीभावश्च (२-४-१८) अत्र सूत्रे किं पदमनुवर्तते? - स नपुंसकम् इति।

२६. प्रत्ययः (३-१-१) परश्च (३-१-२) इति सूत्रद्वयं कियत्पर्यन्तमनुवर्तते?

-अपञ्चमपरिसमाप्तेः।

२७. स्यतासी विकरणौ कयोः परयोः? - लृलुटोः।
२८. च्लिविकरणः कदा आयाति? - लुङि ।
२९. कृदतिङ् (३-१-९३) इति कीदृशं सूत्रम्? - संज्ञाधिकारः।
३०. कर्मण्यण् (३-२-१) इति सूत्रं कस्मिन् अध्याये वर्तते?- तृतीये।
३१. अभिज्ञावचने कः लकारः? - लृट् ।
३२. स्मे परे कः लकारः ? - लट्।
३३. इङ्धार्योः अकृच्छ्रिणि कः प्रत्ययः? - शतृ।
३४. भास्धातोः वरचि किं रूपम्? - भास्वरः।
३५. घः कर्मणि कः प्रत्ययः? - ष्ट्रन्।
३६. उणादयो बहुलम् इति सूत्रं कस्मिन् अध्यायेऽस्ति? - तृतीये।
३७. व्रजयजोः भावे कः प्रत्ययः? - क्यप्।
३८. नपुंसके भावे कः प्रत्ययः? - क्तः।
३९. लिङर्थे कः लकारः ? - लेट्।
४०. अष्टाध्याय्याम् आर्धधातुकसंज्ञासूत्राणि कति? - चत्वारि।
४१. चतुर्थाध्यायस्य प्रथमं सूत्रं किम् ? - ङ्याप्प्रातिपदिकात् (४-१-१)
४२. स्त्रियाम् (४-१-३) इत्यधिकारे कति सूत्राणि सन्ति? - अशीतिः।
४३. तद्धिताः (४-१-७६) इत्यधिकारसूत्रं कियत्पर्यन्तमनुवर्तते?
- आपञ्चमपरिसमाप्तेः।
४४. कुलात् कः प्रत्ययः? - खः।
४५. क्षत्रात् कः प्रत्ययः? - घः।
४६. अग्नेः कः प्रत्ययः? - ढक्।
४७. भिक्षादिभ्योऽण् (४-२-३८) सूत्रं कस्मिन् अधिकारे वर्तते?
- तस्य समूहः (४-२-३७)
४८. ग्रामजनबन्धुभ्यः कः प्रत्ययः? - तल्।
४९. संस्कृतम् (४-४-३) सूत्रेण कः प्रत्ययः विधीयते? - ठक्।
५०. प्राग्घितात् कः प्रत्ययः? - यत्।
५१. शरीयावयवाद्यत् (५-१-६) सूत्रे यत् प्रत्ययः कस्मिन् अर्थे? - हिते।
५२. वस्नं नाम किम् ? - मूल्यम्।
५३. पारायणं नाम किम्? - आदितः आरभ्य अन्तादविच्छेदेन वेदाध्ययनम्।
५४. तुरायणं नाम किम्? - संवत्सरसाध्यः हविर्यज्ञविशेषः।

५५. चाद्रायणं नाम किम्? - तपोविशेषः।
५६. समीनः कः? - समया निर्वृत्तः।
५७. पत्यन्तपुरोहितादिभ्यः कः प्रत्ययः? - यक्।
५८. तस्य पूरणे कः प्रत्ययः? - डट्।
५९. द्रुमः इत्यत्र कः प्रत्ययः? - मः।
६०. तुन्दिलः इत्यत्र कः प्रत्ययः? - इलच्।
६१. प्रकारवचने कः प्रत्ययः? - थाल् जातीयर् च।
६२. रूपप् प्रत्ययः कस्मिन् अर्थे? - प्रशंसायाम्।
६३. षाष्ठे द्वित्वप्रकरणे प्रथमं सूत्रं किम्? - एकाचो द्वे प्रथमस्य(६-१-१)
६४. एकः पूर्वपरयोः (६-१-८४) किदृशं सूत्रम्? - अधिकारसूत्रम्।
६५. वर्चस्केऽवस्करः (६-१-१४८) सूत्रे वर्चस्कं नाम किम् ?- कुत्सितं वर्चः।
६६. पदेऽपदेशे (६-२-७) सूत्रे अपदेशः कः? - व्याजः।
६७. कारनाम्नि च प्राचां हलादौ (६-३-१०) सूत्रे कारः नाम कः?

- वणिग्भिः कर्षकैः पशुपालैश्च राज्ञे देयः भागः रक्षनिबन्धनः।

६८. शरादीनाश्च (६-३-१२०) सूत्रेण किं विधीयते? - पूर्वस्य अणः दीर्घः।
६९. अङ्गस्य सूत्रं कस्मिन् अध्यायेऽस्ति? - षष्ठे।
७०. घुषिरविशब्देने (७-२-२३) सूत्रे अविशब्दनं नाम किम्? - अप्रतिज्ञानम्।
७१. लुभो विमोहने (७-२-५४) सूत्रे विमोहनं नाम किम्? - आकुलीकरणम्।
७२. उर्ऋत् (७-४-७) सूत्रे तपरकरणं किं ज्ञापयति? - अणुदित्सूत्रे परेण ग्रहणम्।
७३. वच उम् (७-४-२०) सूत्रस्य किमुदाहरणम्? - अवोचत्।
७४. आष्टमिकद्वित्वप्रकरणे प्रथमं सूत्रं किम् ? - सर्वस्य द्वे (८-१-१)।
७५. अहेति विनियोगे च (८-१-६१) सूत्रे विनियोगः कः?

- नानाप्रयोजनः नियोगः।

७६. त्रिपाद्यां प्रथमं सूत्रं किम्? - पूर्वत्रासिद्धम् (८-२-१)
७७. मादुपधायाश्चेति सूत्रे मात् इत्यस्य कः विग्रहः?

- मश्च अश्च तयोः समाहारः। तस्मात्।

७८. ओमभ्यादाने (८-२-८७) सूत्रे अभ्यादानं नाम किम्? - प्रारम्भः।
७९. णत्वप्रकरणम् अष्टमाध्यायस्य कस्मिन् पादे आरभ्यते? - चतुर्थे।
८०. अनुस्वारस्य ययि परे कः आदेशः? - परसवर्णः।



# वाक्यपदीयम्

## ब्रह्मकाण्डम्

१. वाक्यपदीयं कः रचितवान् ? - भर्तृहरिः।

२. किं नाम वाक्यपदीयम् ?

- वाक्यञ्च पदञ्च वाक्यपदे। ते अधिकृत्य कृतो ग्रन्थः।

३. वाक्यपदीये कति काण्डानि सन्ति ? - त्रीणि।

४. वाक्यपदीये कानि काण्डानि सन्ति ?

- वाक्यकाण्डम्, पदकाण्डम्, ब्रह्मकाण्डम्।

५. सृष्टिप्रक्रियाविषये भर्तृहरिणा कः वादः स्वीकृतः ? - विवर्तवादः।

६. व्याकरणे अनादिनिधनं ब्रह्म किम् ? - शब्दतत्त्वम्।

७. शब्दतत्त्वं ब्रह्म कथं विवर्तते ? - अर्थभावेन।

८. अतत्त्वतः अन्यथा प्रथा कः ? - विवर्तः।

९. सतत्त्वतः अन्यथा प्रथा कः ? - विकारः।

१०. एकमेव शब्दब्रह्म कथं भिन्नम् ? - शक्तिव्यपाश्रयात्।

११. एकमेव शब्दब्रह्म पृथक्त्वेन इव कथं वर्तते ? - शक्तिभ्यः।

१२.शब्दब्रह्मणः शक्तिः का ? - कालशक्तिः।

१३. शब्दब्रह्मणः कालशक्तिः कीदृशी ? - आरोपितनिमेषादिभेदवती।

१४. भावविकाराः कति ? - षट्।

१५. षट् भावविकाराः के ?

- जायते, अस्ति, विपरिणमते, वर्धते, हसति, नश्यति।

१६. कालशक्तिम् उपाश्रिताः के ? - जन्मदायः षट् विकाराः।

१७. षड्विकाराः कस्य योनयः ? - भावभेदस्य।

१८. समस्तजगतः मूलकारणं किम् ? - ब्रह्म।

१९. सर्वबीजस्य एकस्य शब्दब्रह्मणः कीदृशी स्थितिः?

- भोक्तृभोक्तव्यभोगरूपा।

२०. शब्दब्रह्मणः प्राप्त्युपायः कः ? - वेदः।

२१. शब्दब्रह्मणः अनुकारः कः ? - वेदः।

२२.एकः एव वेदः कथं समाम्नातः ? - ऋग्यजुस्सामाथर्वभेदेन।

२३. वेदशाखानां बाहुल्येऽपि तासां कः विशेषः ? - एककर्माङ्गित्वम्।

२४. वेदशाखासु शब्दानां किं दृश्यते ? - नियतबोधजनकत्वम्।
२५. दृष्टादृष्टप्रयोजना: का: ? - स्मृतय:।
२६. वेदविद्भिः स्मृतय: कम् आश्रित्य प्रकल्पिता: ? - वेदम्।
२७. स्मृतीनां प्रामाण्यं कथम् ? - वेदमूलकत्वात्।
२८. दर्शनभेदा: किम् आश्रित्य मता: ? - वेदस्य अर्थवादरूपवाक्यानि।
२९. वेदस्य अर्थवादरूपाणि आश्रित्य के मता: ?

- एकत्विनां द्वैतिनां च प्रवादा:।

३०. कीदृशी विद्या सत्या उक्ता ? - एकपदागमा।
३१. प्रणवरूपेण सर्ववादाविरोधिनी का विद्या युक्ता ? - एकपदागमा।
३२. ज्ञानसंस्कारहेतव: के प्रतायन्ते ? - विद्याभेदा:।
३३. विद्याभेदा: के ? - व्याकरणादय:।
३४. वेदस्य अङ्गानि कानि ?

- व्याकरणशिक्षानिरुक्तकल्पज्यौतिषच्छन्द:शास्त्राणि।

३५. वेदस्य उपाङ्गानि कानि ? - पुराणन्यायमीमांसाधर्मशास्त्राणि।
३६. ब्रह्मण: आसन्नं किम् ? - व्याकरणम्।
३७. छन्दसां प्रथमम् अङ्गं किम् ? - व्याकरणम्।
३८. तपसाम् उत्तमं तप: किम् ? - व्याकरणम्।
३९. प्राप्तरूपविभागा का ? - वाक्।
४०. साधुशब्दज्ञानार्थं सरल: मार्ग: क: ? - व्याकरणम्।
४१. अर्थप्रवृत्तितत्त्वानां निबन्धनं किम् ? - शब्दा:।
४२. शब्दानां तत्त्वावबोध: कस्मात् ऋते नास्ति ? - व्याकरणात्।
४३. अपवर्गस्य द्वारं किम् ? - व्याकरणम्।
४४. वाङ्मलानां चिकित्सितं किम् ? - व्याकरणम्।
४५. सर्वविद्यानाम् अधिविद्यं किं प्रकाशते ? - व्याकरणम्।
४६.सिद्धिसोपानपर्वणाम् आद्यं पदस्थानं किम् ? - व्याकरणम्।
४७. इयं व्याकरणविद्या केषां राजपद्धति: ? - मोक्षमाणानाम्।
४८. इयं व्याकरणविद्या मोक्षमाणानां कीदृशी राजपद्धति:?- अजिह्मा।
४९. अर्थजातय: सर्वा: किन्निबन्धना: ? - शब्दाकृतिनिबन्धना:।
५०. कुत्र अतीतविपर्यास: केवलामनुपश्यति ? - व्याकरणे।
५१. छन्दस्य: इत्यस्य क: विग्रह: ? - छन्दसे हित:।

५२. शब्दाख्यं ब्रह्म कुत्र आच्छादितं वर्तते ? - वैकृतध्वनिरूपे तमसि।

५३.ध्वनिः कतिविधः ? - द्विविधः।

५४. द्वौ ध्वनी कौ ? - प्राकृतः वैकृतश्च।

५५. स्फोटस्य अभिव्यञ्जकः कः ? - प्राकृतध्वनिः।

५६. वाचः निमित्तानि प्रतिबिम्बवत् कुत्र भासन्ते ? - स्फोटे।

५७. प्रक्रियाभेदैः किं बहुधा प्रविभज्यते ? - शब्दब्रह्म।

५८. व्याकरणं प्राप्य किम् अधिगम्यते ? - परं ब्रह्म।

५९. किम् आगम्य परं ब्रह्माधिगम्यते ? - व्याकरणम्।

६०. व्याकरणे महर्षिभिः शब्दार्थसम्बन्धाः कीदृशाः उक्ताः ? - नित्याः।

६१. व्याकरणशास्त्रे कः शब्दः नित्यः उक्तः ? - स्फोटः।

६२. वाक्यपदीयानुसारं कति पदार्थाः ? - अष्टौ।

६३.वाक्यपदीयानुसारं के अष्टौ पदार्थाः ? - अपोद्धारपदार्थाः, स्थितलक्षणाः, अन्वाख्येयाः, प्रतिपादकाः, कार्यकारणभावः, योग्यभावः, धर्मः, प्रत्ययः।

६४. लिङ्गैश्च स्वशब्दैश्च के अस्मिन् शास्त्रे उपवर्णिताः ? - साधुशब्दाः।

६५.स्मृत्यर्थं कीदृशाः शब्दाः यथाशास्त्रम् अनुगम्यन्ते ? - साधवः।

६६. साधुशब्दाः के ? - धर्मसाधनत्वेन बोधिताः।

६७. असाधुशब्दाः के ? - अनिष्टसाधनत्वेन प्रयुक्ताः।

६८. व्यवस्थानित्या नाम का ? - प्रवाहनित्यता।

६९. साधुत्वविषया स्मृतिः का ? - व्याकरणस्मृतिः।

७०. वाक्यपदीये कति प्रमाणानि उक्तानि ? - पञ्च।

७१. वाक्यपदीये कानि प्रमाणानि उक्तानि ?
- प्रत्यक्षम्, अनुमानम्, शब्दः, अभ्यासः, अदृष्टम्।

७२. भर्तृहरिमते किं प्रमाणं प्रधानम् ? - आगमः (शब्दः)।

७३. धर्मः कस्मात् ऋते न व्यवतिष्ठते ? - आगमात्।

७४. ऋषीणामपि यत् ज्ञानं तत् किम्पूर्वकम् ? - आगमपूर्वकम्।

७५. आगमात् ऋते धर्मः केन न व्यवतिष्ठते ? - तर्केण।

७६. कश्चित् तर्केण आगमान् कुतः न बाधते ? - लोकप्रसिद्धत्वात्।

७७. भावानां प्रसिद्धिः केन अतिदुर्लभा ? - अनुमानेन।

७८. पदार्थगता शक्तिः कदा प्रतिबध्यते ? - विशिष्टद्रव्यसम्बन्धे।

७९. कुशलैः अनुमातृभिः यत्नेन अनुमितोऽपि अर्थः अभियुक्ततरैः किं क्रियते ?
- अन्यथा एव उपपाद्यते।

८०. परेषाम् असमाख्येयं कुतः जायते ? - अभ्यासात्।

८१. मणिरूप्यादिविदां तज्ज्ञानं किं न ? - आनुमानिकम्।

८२. प्रत्यक्षमनुमानञ्च व्यतिक्रम्य काः व्यवस्थिताः ?
- पितृरक्षःपिशाचानां सिद्धयः।

८३. योगिनाम् अतीतानागतज्ञानं कस्मात् न विशिष्यते ? - प्रत्यक्षात्।

८४. योगिनः अतीन्द्रियान् भावान् कथं पश्यन्ति ? - आर्षेण चक्षुषा।

८५. योगिनां वचनं केन न बाध्यते ? - अनुमानेन।

८६. कुत्र स्थितं तम् अन्यः न निवर्तयेत् ? - प्रत्यक्षपक्षे।

८७. आचण्डालं मनुष्याणां पुण्यपापविषये अल्पं किम्?- शास्त्रप्रयोजनम्।

८८. आगमम् उपासीनः कैः न बाध्यते ? - हेतुवादैः।

८९. अनुमानप्रधानस्य किम् न दुर्लभः ? - विनिपातः।

९०. सनिबन्धनां स्मृतिमाश्रित्य किम् आरभ्यते ? - शब्दानुशासनम्।

९१. शब्दानामनुशासनं कैः आरभ्यते ? - शिष्टैः।

९२. शब्दविदः कति शब्दान् विदुः ? - द्वौ।

९३. उपादानशब्देषु कौ द्वौ शब्दौ विदुः ?
- व्यङ्ग्यः स्फोटः, व्यञ्जकः प्राकृतध्वनिः।

९४. स्फोटवैखर्योः आत्मभेदः अस्तीति के आहुः ? - पुराणगाः।

९५. अरणिस्थं ज्योतिः कस्य कारणम् ? - प्रकाशान्तरस्य।

९६. बुद्धिस्थः शब्दः केषां पृथक्कारणं भवति ? - श्रुतीनाम्।

९७. स्फोटध्वन्योः कः सम्बन्धः ? - व्यङ्ग्यव्यजकभावः।

९८. कः अक्रमः क्रमरूपेण भेदवान् इव जायते ? - स्फोटाख्यः शब्दः।

९९. ज्ञाने किं किं दृश्यते ? - आत्मरूपं जेयरूपञ्च।

१००. शब्दे किं किं प्रकाशते ? - अर्थरूपं स्वरूपञ्च।

१०१. शब्दसंज्ञकः क्रतुः किमिव आपन्नः ? - आण्डभावम्।

१०२. एकबुद्धिविषया मूर्तिः कुत्र आक्रियते ? - पटे।

१०३.प्रयोक्तुः बुद्धिः पूर्वं कुत्र प्रवर्तते ? - शब्देषु।

१०४.तेजसः कति शक्तयः ? - द्वे।

१०५. तेजसः द्वे शक्ती के ? - ग्राह्यत्वं ग्राहकत्वञ्च।

१०६. शब्दगतं शक्तिद्वयं किम् ? - ग्राह्यत्वं ग्राहकत्वञ्च ।

१०७. कीदृशैः शब्दैः अर्थः न प्रकाश्यते ? - विषयत्वमनापन्नैः ।

१०८. विषयत्वमनापन्नैः शब्दैः किं न प्रकाश्यते ? - अर्थः ।

१०९. वृद्ध्यादयः शब्दाः कीदृशाः ? - स्वरूपोपनिबन्धनाः ।

११०. आदैज्वृद्ध्योः कः सम्बन्धः ? - संज्ञासंज्ञिभावः ।

१११. अग्नेर्ढक् (४-२-३३) सूत्रस्थाग्निशब्देन कः उच्यते ?

- लक्ष्यस्थः अग्निशब्दः ।

११२. नियतं कः कार्यभाक् न ? - यः यः उच्चार्यते सः ।

११३. अन्यप्रत्यायने कस्य शक्तिः न प्रतिबध्यते ? - उच्चारितस्य ।

११४. ढगादिकार्याणां सम्बन्धः कैः परिकल्प्यते ? - लक्ष्यस्थैः अग्निशब्दादिभिः ।

११५. उपमानोपमेययोः किम् आश्रितम् ? - सामान्यम् ।

११६. संज्ञिना अभिसम्बन्धात् प्राक् संज्ञा कीदृशी भवति ? - रूपपदार्थिका ।

११७. संज्ञाशब्दात् प्रथमा कदा भवति ? - संज्ञासंज्ञिनोः तादात्म्यारोपे ।

११८. शब्दशास्त्रे शब्दस्य संज्ञा इति केन सूत्रेण बोध्यते ?

- स्वं रूपं शब्दस्याशब्दसंज्ञा (१-१-६८)

११९. जातिप्रत्यायिता व्यक्तिः कुत्र उपतिष्ठते ? - प्रदेशेषु ।

१२०. वर्णव्यतिरेकेण अन्यत् किं न विद्यते ? - पदम् ।

१२१. वर्णपदाभ्यां किं व्यतिरिक्तं न ? - वाक्यम् ।

१२२. पदे के न विद्यन्ते ? - वर्णाः ।

१२३. वर्णेषु के न विद्यन्ते ? - अवयवाः ।

१२४. मुख्यस्फोटः कः ? - अखण्डवाक्यस्फोटः ।

१२५. स्फोटः कं कालम् अनुपतति ? - ध्वनिकालम् ।

१२६. स्फोटस्य ग्रहणे हेतुः कः ? - प्राकृतध्वनिः ।

१२७. स्फोटात्मा कैः न भिद्यते ? - वैकृतध्वनिभिः ।

१२८. वृत्तयः कति ? - तिस्रः ।

१२९. काः वृत्तयः ? - द्रुता, मध्या, विलम्बिता ।

१३०. शब्दाभिव्यक्तिवादिनां त्रयः वादाः के ?

- इन्द्रियस्य, शब्दस्य, उभयस्य वा संस्कारः ।

१३१. समाधानाञ्जनादिभिः कस्य संस्कारः ? - इन्द्रियस्य ।

१३२. पृथिव्यादिगन्धप्रतिपत्तये कस्य संस्कारः ? - विषयस्य ।

१३३. ध्वनिना कयोः संस्कारः ? - विषयेन्द्रिययोः।

१३४. आद्यसंख्याग्रहणं केषां प्रतिपत्तये उपायः ? - संख्यान्तराणाम्।

१३५. स्फोटरूपाविभागेन कस्य ग्रहणमिष्यते ? - ध्वनेः।

१३६. जातिस्फोटः नाम कः ? - अनेकव्यक्त्यभिव्यङ्ग्यः।

१३७. स्फोटनादयोः कः सम्बन्धः ? - व्यङ्ग्यव्यञ्जकभावः।

१३८. देशभेदविकल्पेऽपि कयोः न भेदः ? - ध्वनिशब्दयोः।

१३९. वृत्तिकालः स्वकालश्च कस्य भेदात् विभाव्यते ? - नादस्य।

१४०. मतभेदेन कस्य शब्दत्वापत्तिः इष्यते ? - वायोः, अणूनाम्, ज्ञानस्य।

१४१. कण्ठादिस्थानेषु अभिहतः वायुः किं प्रतिपद्यते ? - शब्दत्वम्।

१४२. प्राणः वर्णान् अभिव्यज्य कुत्र उपलीयते ? - वर्णेषु एव।

१४३. अयं संसारः कस्य परिणामः इति विदुः ? - शब्दस्य।

१४४. प्रथमम् एतद् विश्वं कुतः व्यवर्तत ? - छन्दोभ्यः एव।

१४५. लोके कस्मात् ऋते प्रत्ययः नास्ति ? - शब्दानुगमात्।

१४६. अर्थक्रियासु सर्वान् देहिनः का समीहयति ? - वाक्।

१४७. शब्दसंस्कारः कस्य सिद्ध्युपायः ? - परमात्मनः शब्दब्रह्मणः।

१४८. परमात्मनः सिद्धिः का ? - शब्दसंस्कारः।

१४९. विषापहरणादिषु के यतशक्तयः दृष्टाः ? - शब्दाः।

१५०. ज्ञानस्य शब्दत्वापत्तिः कस्य मते ? - पतञ्जलेः।

१५१.भर्तृहरिमते वाक् कतिधा ? - त्रिधा।

१५२.भर्तृहरिमते काः वाचः ? - पश्यन्ती, मध्यमा, वैखरी।

१५३. कायवाग्बुद्धिविषयाः मलाः कैः विशुद्ध्यन्ते ?
- चिकित्सालक्षणाध्यात्मशास्त्रैः।

१५४. संस्कारहीनं शब्दं किं वदन्ति ? - अपभ्रंशम्।

१५५. अस्वगोण्यादयः शब्दाः क्व साधवः ? - विषयान्तरे।

१५६. भर्तृहरिमते केषां वाचकत्वम् उक्तम् ? - साध्वसाधूनाम् उभयेषाम्।



## अनुसृतग्रन्थसूची

१) अष्टाध्यायी - पाणिनिः, चौखम्बा संस्कृत सीरीज् आफिस्, वाराणसी.

२) महाभाष्यम् - पतञ्जलिः, चौखम्बा संस्कृत प्रतिष्ठानम्, वाराणसी.

३) परिभाषेन्दुशेखरः - नागेशभट्टः, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी.

४) वैयाकरणभूषणसारः - कौण्डभट्टः, चौखम्बा अमरभारती प्रकाशनम्, वाराणसी.

५) परमलघुमञ्जूषा - नागेशभट्टः, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी.

६) प्रौढमनोरमा (शब्दरत्नसहिता) - भट्टोजिदीक्षितः, चौखम्बा अमरभारती प्रकाशनम्, वाराणसी.

७) वैयाकरणसिद्धान्तकौमुदी - भट्टोजिदीक्षितः, मौतीलाल बनारसी दास, वाराणसी.

८. वाक्यपदीयम् - भर्तृहरिः - चौखम्बा संस्कृत संस्थानम्, वाराणसी.



## डॉ. शिवराम रामकृष्ण भट्टः



कर्णाटकराज्यस्य उत्तरकन्नडमण्डले मुण्डगोडनामके उपमण्डले जवळ्होण[illegible]मे जनिमल[illegible]त। अध्ययनं समाप्य साम्प्रतं रामटेक[illegible]विकुलगुरु[illegible]लिदाससंस्कृतविश्वविद्यालये व्याकरण[illegible] सहायक[illegible]ापकत्वेन कार्यनिरतः वर्तते। अनेन व[illegible]योगिता[illegible]क्षरीसमस्यापूर्त्यादिस्पर्धासु बहुवारं प्र[illegible]मपुरस्कारः [illegible]चार्यपरीक्षायां(एम. ए.) सर्वाधिकायप्राप्तये सुवर्णपदकञ्च प्राप्तं वर्तते।

मूल्यम् - ₹ ८०/-

ISBN ₹

